

# राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ३६ ॥

अथ

श्रीहरिनाथाचार्यविरचिता

# सङ्केतकौमुदी

भाषानुवादविभूषिता

डा० प्रकाशपाण्डेयेन सुसंपाद्य अनूदिता




CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# Rashtriya Sanskrit Sansthan

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**



**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**



*Gen al Editor*

**Dr. G. C. Tripathi**



# No. 36

# SAṄKETA-KAUMUDĪ

**( With Hindi translation )**

*A Work on Phalita Jyotiṣa or Indian Astrology*

*Edited by*

Dr. Prakash Pandey




ALLAHABAD
1993

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )
नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

षट्त्रिंशं प्रसूनम्

श्रीहरिनाथाचार्यविरचिता

# सङ्केतकौमुदी

( भाषानुवादविभूषिता )

—•—

सम्पादकः
डॉ० प्रकाश पाण्डेयः

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आजाद पार्क
इलाहाबादः—२११००२
१९९३

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

श्रीहरिनाथाचार्यविरचिता

# सङ्केतकौमुदी

[ भाषानुवादभाविता ]

सम्पादकः

डॉ० प्रकाश पाण्डेय



श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयाग-२११००२
१९९३ ई०

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रकाशकः
डॉ० गयाचरण त्रिपाठी
प्राचार्यः
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
इलाहाबाद-२

●

पुनर्मुद्रणादिकाः सर्वेऽधिकाराः राष्ट्रियसंस्कृतसंस्थानेन स्वायत्तीकृताः

●

मूल्यम्

●

978-93-83135-62-2

मुद्रकः
शाकुन्तल मुद्रणालयः
३४, बलरामपुर हाउस
इलाहाबाद-२

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## FOREWORD

We are extremely glad to place in the hands of the lovers of Indian Astrology the first ever work of *Jyotiṣa* published by this Vidyapeetha, namely the *Saṅketa-kaumudī* composed by Acārya Harinātha. The Saṅketa-kaumudī is a valuable treatise of *Phalita Jyotiṣa* in five chapters, unpublished hitherto, in which the *phalam* of every individual Planet is precisely and candidly indicated depending upon its position in the horoscope of a person and its conjunction with other planets.

The work, composed in simple and lucid Sanskrit, is unsurpassed in clarity of expression and transparence of meaning, though, speaking frankly, its Sanskrit is often unchaste and grammatically incorrect and reminds one of the 'Brahmanical Hybrid Sanskrit' of many similar works written in medieval ages.

One of the significant contributions of the Saṅketa-kaumudī is its unique concept of six *bhāvas*, i. e. positions

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

of Planets in various situations and/or in conjunction with other planets. which are termed as *lajjita, garvita, kṣudhita, tṛṣita, mudita* and *kṣobhita* (1. 2. ff.) respectively.

The present edition of *Saṅketa-kaumudi* is based on two MSS, one in the Devanāgarī script procured from Lucknow and the other in Śāradā script, procured from Srinagar, Kashmir. Since these MSS belong to two entirely different text-traditions, a high degree of correctness has been achieved in restoring the text.

The Śāradā MS of Shrinagar has a verse at the end of the text ( 5th Adhy. ) Which says that : "this Saṅketa-kaumudi came into being in the Śaka year 1624 (=A.D. 1702) together with *Alaṃkaraṇa* (the name of another treatise ?).*" I feel that this date refers to the copying of the MS and not to the composition of text) and if it really be so, the work must have been composed at least 50 years prior to that, if not more, i. e. around 1650 A. D. or earlier.

The task of editing this work was asigned to Dr. Prakash Pandey of this Vidyapeetha who is an excellent scholar of a number of branches of Sanskrit learning, especially Veda, Tantra (Āgama), Darśana, Sāhitya, Āyurveda and Jyotiṣa. He has not only carried out the

* शाके जिनात्यष्टिमिते इषशुक्ले रवेस्तिथौ ।
अलंकरणेन सार्द्धं जाता संकेतकोमुदी ।।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

job of editing with utmost sinceraity but has also appended a valuable introduction to this text. I shower my blessings upon him and wish that he may give us many more such useful and scholarly works in future.

G. N. Jha K. S. Vidyapeetha
Allahabad
25th of June, 1993

**Gaya C. Tripathi**
*Principal*



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# भूमिका

स्वर्णाभो प्रकटे विभाति विशदे खेऽनन्तकालाच्च यो
पाता विन्ध्यभवस्य भाति सकलान्वासन्तिकाद्यान्नृतून् ।
खेटानां पतिरद्भुतस्थपतिरासूतेऽखिलाङ्काश्यपीम् ।
सोऽवद्यान्विधुनोत्वशेषग्रहजान् कीर्तिञ्च दद्याद्रविः ।।

विधूतकल्मषमण्डलात्प्रसरन्तो मरीचयः ।
रुक्मभुक्ताब्जवर्णस्य कुर्वन्त्वमो परं शिवम् ।।

कर्मण्येवाधिकारः प्रदत्तो विधिना फलं तु पिहितं शक्तिचक्रे शिवस्य । यो हि कर्मकरो ना सोऽनुदिनमनुक्षणं कर्मव्यापारे व्यापृतः फललाभकालमजानन् मार्गं मार्गते तज्ज्ञानस्य । अल्पज्ञत्वलक्षणः मनुजः भ्रमीव भ्रमन् निसर्गतः जिज्ञासुर्भवति भविष्यति किं भविष्यतीति विषये । सैव जिज्ञासा त्रिस्कन्धात्मकस्य ज्यौतिषः शास्त्रस्य जनिकारणं संवृत्तमिति कश्चिदप्यनुमातुं प्रभवेत् । किञ्च कदास्य शास्त्रस्य प्रभव इति निर्णेतुं विपश्चितोऽपि गर्तगतगोधाविखण्डनप्रयासवद् बहुयतन्तेऽन्ते च सर्वं घट्टकुटीप्रभातायितं भवति वेदानामवतरणकालज्ञानप्रयासवत् ।

अस्माकमनिर्ज्ञातकालसमुल्लसितेषु वेदेषु प्रकामं प्रथनं श्रूयते प्रकृतशास्त्रसम्बद्धम् । पश्यन्तु जिज्ञासवः ऋग्वेदे ३।५४।१९, ५।५६।३; ७।८६।१, १०; ८।२४।२७; १०।८५।२; ११।१७; अथर्ववेदे २।१३।३० तैत्तिरीयसंहितायां ४।४।१०।१-३; शतपथब्राह्मणे २।१।२।४; तैत्तिरीयब्राह्मणे १।५; ३।१; छन्दोग्योपनिषदि ८।१३; मैत्रायण्युपनिषदि ७।६ इत्यादीनि दिङ्मात्रो-

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

दाहृतानि स्थलानि । सिद्धमेतद् भारतीया अतिप्राचीनात् कालात् सिद्धान्ते जातके च सुष्ठु निपुणाः पारङ्गताश्चासन्निति ।

किन्तु नूत्नैतिह्यगवेषकाः प्राच्यविद्यासु दत्तावधानाः पाश्चात्याः विद्वस्यमानाः शास्त्रस्यास्य जनिभूमिं विज्ञातुकामाः शाखामृगायिताः भ्रान्ताश्च जाताः । फ्रांसीयः **बिओटो** बभाण यन्नक्षत्राणां ज्ञानं चीनाद् भारते प्रविवेश । **ह्विटने** च तं समर्थयन्नासीत् । केचन भणन्ति यन्मण्डूकप्लुत्या **बेबिलोन** देशादरबदेशाद्वा नाक्षत्रं ज्ञानमार्यजनाः लेभिरे । यदप्यारब्याः ज्यौतिषज्ञानविषये भारतीयानामुत्तमर्णत्वं स्वकीयाधमर्ण्यं मुक्तकण्ठेन स्वीकुर्वन्ति । एवञ्च **चीनसिद्धान्ते** आदौ चतुर्विंशतिनक्षत्राणां परम्परासीदनन्तरं च वैक्रमाब्दात् प्राक् प्रथमसहस्राब्द्यां तेषां संख्या अष्टाविंशतिर्जातेति **थिबो** स्वयमेवालिखत् ।

अथ भारते चतुर्विंशति नक्षत्राणां नास्ति कुत्रापि संकेतलेशः । तानि हि साभिजिन्नक्षत्रमष्टाविंशति संख्याकानि वर्णितानि श्रुतिषु । अष्टाविंशतीति-संख्यासाम्यं पश्यन्तः ज्ञानलवदुर्विदग्धाः भारतस्याधमर्णत्वं प्रचारयामासुः । नहि निमीलितबुद्धयः पश्यन्तोऽपि पश्यन्ति **तैत्तिरीय संहितायां** (४।४।१०।१-३) **तैत्तिरीयब्राह्मणे** (१।५; ३।१) **अथर्वसंहितायां** (२।१३।३०) **वेदाङ्गज्योतिषे** च तत्तन्नक्षत्राणां तदभिमानिदेवानां च सुस्पष्टं वर्णनम् । तेषाञ्च ग्रन्थानामुदयः **सि-इ-यू सिद्धान्त**प्रकाशनानन्तरं बभूवेति न कोऽपि ख्यापयितुं प्रभविष्यति । एते सर्वे वैदिकग्रन्थाः **सि-इ-यू सिद्धान्तो**दयकल्पनातः प्राक् सुप्रतिष्ठिता आसन् भारते इत्यत्र नास्ति संदेहः ।

किञ्चान्यत्र ऋक्षाणां नक्षत्राणां वोपयोगः देवाराधनादिषु नासीत् । भारते च मुहूर्तज्ञानानन्तरमेव यागादयः सम्भवन्ति स्मेति वैदिकः सिद्धान्तः । नक्षत्राणां नामान्यन्वर्थानि संस्कृतमूलकानि सन्तीत्यतिरोहितम् । बालगङ्गाधरतिलकेन **'ओरायने'**; शंकरबालकृष्णदीक्षितेन **'भारतीय-ज्योतिषे'** पाण्डुरङ्गवामनकाणेमहोदयेन **धर्मशास्त्रस्येतिहासे** किं बहुना

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

जैकोबीप्रभृतिभिः पाश्चात्यैरपि दुराग्रहाणां कुतर्ककालुष्यं सत्तर्काश्मपरीक्षया न्यक्कृतम् । अलमजगलस्तनायितेन विवादेनेति सर नार्मन लकीअरस्य शब्दा उद्ध्रियन्तेऽन्ते—

"एनेक्सिमेण्डरोवाच यत् पृथिवी वर्तुलासीत् । तदा सर्वाणि ज्ञातस्थलानि वर्तुलायास्तस्या अवर्तुलेषु क्षेत्रेष्ववस्थिता आसन् । प्लेटो हि ज्यामितेरात्यन्तिकं स्वरूपं घनं मत्वाकल्पयद्यत् पृथिव्यपि घनाकारा । एवञ्च यवनैर्ज्ञाता पृथिवी तस्याः घनाकारायाः पृथिव्याः उर्ध्वतलेऽवस्थितेति । एतादृशेषु विषयेषु दर्पातिशयमत्ताः यवनाः किमप्युन्नतिं न विहितवन्तः । एवञ्च स्वपूर्वजेभ्यः वैदिकयाजकेभ्यः प्रकृष्टेनावरा आसन् ।" (द्र० Dawn of Astronomy, 1834, पृ० 8) इति ।

मेषादिराशीनां विषयेऽपि तादृश एव विवादः प्राचलत् । केचन बभणुर्यद् ग्रहाणां प्रथमं ज्ञानं बेबिलोनदेशावास्तव्याः कृतवन्तः प्रथमं शुक्रस्य तदनन्तरमन्येषामिति । किन्तु कृच्छ्रपरिरक्षणीय एव एष सिद्धान्तः । अथर्वसंहितायां ऋषिः ग्रहान् प्रसादयितुं स्तौति यथा—

उत्पाताः पार्थिवान्तरिक्षाश्शं नो दिविचरा ग्रहाः ।
शन्नो ग्रहाश्चांद्रमसाः शमादित्याश्च राहुणा ।
शन्नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः ।।

(अथर्वसं० १९।९।७; १०)

न कोऽपि स्थिरतया प्रतिपादयितुं क्षमो यदुक्तं वचनं बेबिलोनसभ्यतायां ग्रहाणां परिज्ञानप्रचारानन्तरमेव प्रत्नैरुक्तमृषिभिरिति । माक्सवेबरः ग्रहाणामाद्याभिज्ञातारान् भारतीयान् स्वीकरोति । (History of Sanskrit Literature p. 241). बेबिलोनियायां प्रथमपरिज्ञातस्यशुक्रस्य सुव्यवस्थितं वर्णनं शतपथब्राह्मणे श्रूयते यथा—

तद्वा एष एव शुक्रो य एष तपति तद्यदेष
एतत्तपति तेनैष शुक्रचन्द्रमा एव मन्थी ।

(श० ब्रा० ४।२।१।१)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्राचीने भारते प्रज्ञानकामाः दैवज्ञान् सिषेविरे इति यजुःसंहितायां श्रूयते—

प्रज्ञानकामाय नक्षत्रदर्शम् ।।

(यजु० ३०।१०)

अन्यान्यपि बहूनि प्रमाणानि सन्ति यान्यधिकृत्य वक्तव्यं यद् भारतीया प्राक्कालादेव नक्षत्रविद्यामर्मज्ञाः सिद्धान्ते फलिते च निष्णाताः ग्रहाणां गत्यादिज्ञानबलेन शुभाशुभफलवक्तार आसन् । किन्तु **वेदाङ्गज्योतिष** (ई० पू० १२००) इति ग्रन्थप्रणयनानन्तरं समुल्लसिताः ग्रन्थाः कालावर्तगर्भीकृताः नोपलभ्यन्ते । पौलिशपैतामहादि सिद्धान्तानां परम्परैवोद्ध्रियते **वराहमिहिरा**दिना । तथापि **महाभारतीयेषु** वचनेषु बहुशः फलितज्योतिषः विवृतत्त्वात् शास्त्रस्यास्याध्ययनपरम्पराजस्रेति स्पष्टमेव । ग्रहप्रभावस्य लोके विश्रुतत्वात् **व्यास** उवाच—

**ते तु क्रुद्धा महेश्वासाः द्रौपदेयाः प्रहारिणः ।**
**राक्षसं दुद्रुवुः संख्ये ग्रहाः पञ्च रविं यथा ।।**

(भीष्मपर्व १००।३७)

ग्रहाणामनुदिशप्रतिदिशगतिमप्युपमानीकरोति **कृष्णद्वैपायनः** तद्यथा—

**प्रत्यागतस्य पुनर्जिष्णुर्जघ्ने संसप्तकान् बहून् ।**
**वक्रातिवक्रगमनाङ्गारक इव ग्रहाः ।।**

(कर्णपर्व ४१।१)

महाविनाशज्ञापकानां वर्णनं धृतराष्ट्राय करोति **व्यासः** —

**श्वेतोग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ।**
**धूमकेतुर्महाघोरः पुष्यं चाक्रम्य तिष्ठति ।।**
**मघास्वंगारको वक्रः श्रवणे च बृहस्पतिः ।**
**भगं नक्षत्रमाक्रम्य सूर्यपुत्रेण पीड्यते ।।**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शुक्रः प्रोष्ठपदे पूर्वे समारुह्य विरोचते ।
रोहिणीं पीडयत्येवमुभौ च शशिभास्करौ ।
चित्रास्वात्यंतरे चैव विष्टितः परुषग्रहः ।।
वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः ।
ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ।।
संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ ।
विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ ।।

(भीष्मपर्व ३।१२-१५; १८, २७) इति ।

वैक्रमाब्दात्प्राक्तृतीयशताब्द्यां बौद्धेन केनापि विश्वसंरचनाविषयः सूर्यप्रज्ञप्तिरिति ग्रन्थः निरमायि । स हि वेदाङ्गज्योतिषमनुधावति । आर्यभट्टाद् (ई० ४७६) अद्य यावदविच्छिन्ना परम्परा वर्तते त्रिस्कन्धस्य शास्त्रस्य ग्रन्थरचनायाः ।

टालेमीहिपार्कसयोरनन्तरमस्माकमार्षो सिद्धान्तः यवनसिद्धान्तेन-परिचितः जातः विरुद्धसिद्धान्तान् विहाय च तं स्वीचकार वराहमिहिरः ज्योतिर्वित्सु यवनानामपि परिगणनं करोति । यथा—

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किम्पुनर्दैवविद्द्विजः ।।

(बृहत्संहितायां २।१५)

यद्यपि वराहः तेषां मतं यथास्थानं बहुशः खण्डयामास । तथापि सारावली-कारेण कल्याणवर्मणा यवनानामपि सिद्धान्तान् समाहृत्य ग्रन्थः विरचितः । यथाहि सारावल्याम्—

अत एव विस्तरेभ्यो यवनेन्द्रादिरचितशास्त्रेभ्यः ।
सकलमसारं त्यक्त्वा तेभ्यः सारं समुद्ध्रियते ।।

(सारा० १।४)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अष्टादशज्योतिषशास्त्रप्रवर्तकेषु यवनमतस्य प्रतिष्ठा कल्याणवर्मणः काले जाता। यथाहि सुधाकरद्विवेदस्य गणकतरङ्गिण्यां श्लोकः—

सूर्यः पितामहो व्यासो वासिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशैवैते ज्योतिःशास्त्रप्रवर्तकाः॥

यद्यपि एतेष्वष्टादशसु नाति प्रथमावरत्वम् तथापि सूर्यः तेषु प्रथम इति सूर्यसिद्धान्ते गदितः। तद्यथा—

शृणुष्वैकमनाः पूर्वं यदुक्तं ज्ञानमुत्तमम्।
युगे युगे महर्षीणां स्वयमेव विवस्वता॥
शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः।
युगानां परिवर्तेन कालभेदोऽत्र केवलम्॥

(सू० सि० ८-९)

किञ्च तेषु यवना अन्त्या इति स्वत एव सिद्धम्। यदप्युपर्युक्तं तेष्वधिसंख्याः सिद्धान्ताः कालेन क्रूरेण कवलीकृताः। तस्मादद्यतनीनाः होराशास्त्रग्रन्थाः यवनसिद्धान्तमिश्रिताः दृश्यन्ते।

अस्ति हि मौलिको भेदः भारतभारतेतरसिद्धान्तयोः। आसीत्पुनर्जन्मकर्मसिद्धान्तयोर्व्यवस्था आद्याकालादेवात्र। सर्वाण्यपि शास्त्राणि तावनुज्झित्य प्राचलन्। किञ्चान्यत्र यूनानादिदेशेषु पुनर्जन्मनः कल्पनाभाव आसीत्। तस्माद्यावनसिद्धान्तस्य मनागेव प्रभावोऽस्माकं जातकशास्त्रेऽस्तीति तर्क्यते।

जातकशास्त्रप्रशंसायां तत्तद् ग्रन्थेषु बहूक्तं किन्तु सुखदुःखादिरूपफलाप्तिविषये कर्मणोऽपरिहार्यत्वात् ग्रहफ़लानामश्मोट्टङ्कितलिपिवदपरिवर्तनीयत्वं नोररीकृतम्। कौटलीयेऽर्थशास्त्रे फलितज्योतिषे निर्भरत्वं निनिन्द चाणक्यः। वराहेण बृहज्जातके क्षेत्रस्थग्रहानां पूर्वार्जितकर्मज्ञापकत्वमुक्तम्। यथाहि—

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कर्मार्जितं पूर्वभवे सदादि यत्तस्य पक्तिं समभिव्यनक्ति ।

(बृ० जा० १।३)

इति । अपि च कल्याणवर्मणा गदितम्—

कर्मफललाभहेतुं चतुराः संवर्णयन्त्यन्ये ।
होरेतिशास्त्र.................................. ॥

(सारा० १।३)

इति । रघुनन्दनः उद्वाहतत्त्वाख्ये निवन्धे दीपिकामतमुदाहरन् ग्रहाणां कर्मज्ञापकत्वमेवं स्थापयति—

अतएव दीपिकायां "ये ग्रहारिष्टसूचकाः" इत्यनेन ग्रहाणां पूर्वसिद्धपापबोधकत्वमिति न तु पापजनकत्वम् । तथा च मत्स्यपुराणम्—

पुराकृतानि पापानि फलन्त्यस्मिंस्तपोधनाः ।
रोगदौर्गत्यरूपेण तथैवेष्टवधेन च ॥

(उद्वा० पृ० २२)

इति । याज्ञवल्क्यः पुरुषार्थस्य श्रेष्ठत्वं सुस्पष्टं स्थापयति । तद्यथा—

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
यत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम् ॥
यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥

(याज्ञवल्क्यस्मृतिः १।३४९; ५१)

तस्माद्दैवविमर्शपर्यायं होराशास्त्रन्नस्यात् पुरुषकारविरतिकारणमपितु निजकृतपूर्वकर्माभिज्ञानपूर्वमैदन्तनीनेतिकर्तव्यतानिर्णायकमेव । किञ्चात्र परम्परैव नोदिका । यथा हि सारावल्यां—

अर्थार्जने सहायः पुरुषाणामापदार्णवे पोतः ।
यात्रासमये मन्त्री जातमपहाय नास्त्यपरः ॥

(१।५)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्राचीने भारते मन्त्रिणोऽपि दैवज्ञा आसन् राजकार्येऽपि समुचित-मूहूर्तादिज्ञानस्यावश्यकत्वात्। तथा हि **याज्ञवल्क्यः**—

**पुरोहितं प्रकर्तव्यं दैवज्ञमुदितोदितम्।**
**दण्डीनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥**

(या० स्मृ० आचाराध्याये ३१३ श्लो०)

तदेवं जातकशास्त्राभिज्ञानं सर्वैः कार्यमित्यतिरोहितं विविधकर्म-विपाकज्ञापकत्वात्।

## ग्रन्थपरिचयः

**संकेतकौमुदी** कालविधुन्तुदेनारुन्तुदायिता नाद्यावधि प्राकाश्यं नीता। न चास्य ग्रन्थस्य मातृकाः अनल्पीयस्यः हस्तंगताः। **आउफ्रेख्टः** चतसृणामेव मातृकाणां विवरणविरहपुरस्सरं संकेतमदात् स्वकीये **कटालॉगस् कटालगोरम्** इति ग्रन्थे। ताश्चोनविंशतिशताब्द्यां प्रकाशितासु ब्यूह्लरादि विनिर्मितासु सूचिसु पञ्जीकृता आसन्निति प्रवादः। यथा हि प्रयागतः १८७७-८० ख्रीष्टाब्दे प्रकाशितायां पश्चिमोत्तर भारते वैयक्तिकसंग्रहेषु संगृहीतमातृकाविवरणिकायां, ब्यूह्लरेण १८७१-७३ ख्रीष्टाब्दे प्रकाशितायां, गुर्जरप्रदेशकाठियावाड़कच्छसिन्धखानदेशेषु वैयक्तिकसंग्रहेषु सुरक्षितानां ग्रन्थानां विवरणिकायां, वाराणसेय संस्कृतकालेजस्य सरस्वती-भवनपुस्तकालस्य मातृकाविवरणिकायां, राजेन्द्रलालमित्रस्य सम्पादकत्वे १८८० ख्रीष्टाब्दे कालिकातः प्रकाशितायां बीकानेरराजसंग्रहालयस्य पुस्तकविवरणिकायाञ्च। किन्तु सर्वत्र हि ग्रन्थनामोल्लेखमात्रं कृतम्। **राजेन्द्रलालमित्राउफ्रेष्टब्यूह्लरादिभिरदृष्टैवासीन्मातृका। राजेन्द्रलाल-मित्रेण** Notices on Sanskrit Manuscripts इति ग्रन्थे ग्रन्थः ग्रन्थकारो वा नोल्लिखितः। तत्र मातृकानुपलब्धिरेव कारणं स्यात्। यद्यपि निर्णय सागरप्रेसे चतुर्दशसंस्कृतग्रन्थानां हस्तनिर्मिता विवरणिका आसीत्। तस्यां परिगृहीतानां सर्वेषां ग्रन्थानां ग्रन्थसारोऽपि संरक्षित आसीत्। तेषु

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

चतुर्दशग्रन्थेष्वन्यतमा **संकेतकौमुद्यप्यासीत्** । किन्तु सा विवरणिका तस्मिन्नेव मुद्रणालये मुमूर्षुस्तिष्ठतीति मन्ये । न कदापि प्राकाश्यं नीता सा तालिका ।

ग्रन्थोऽयं पञ्चस्वध्यायेषु विभज्य विरचितः । तत्र प्रथमाध्याये ग्रन्थोपयोगविधिं वर्णयता ग्रहाणां षड्विधभाववर्णनं विहितं ग्रन्थकारेण । ते हि **लज्जितगर्वितक्षुधिततृषितमुदितक्षोभिताः** । **सारावलीं** विहायान्यत्र तादृशसंज्ञाविधानं सुदुर्लभम् । **सारावल्यां** विष्णुमतानुकूलं नवविधाः ग्रहाणां भावाः प्रकीर्तिताः । यथा च —

**दीप्तः स्वस्थो मुदितः शान्तः शक्तो निपीडितो भीतः ।**
**विकलः खलश्च कथितो नवप्रकारो ग्रहो हरिणा ।।**
**स्वोच्चे भवति दीप्तः स्वस्थः स्वगृहे सुहृद्गृहे मुदितः ।**
**शान्तः शुभवर्गस्थः शक्तः स्फुटकिरणजालश्च ।।**
**विकलो रविलुप्तकरो ग्रहाभिभूतो निपीडितश्चैवम् ।**
**पापगणस्थश्च खलो नीचे भीतः समाख्यातः ।।**

(सारा० ५।२-४)

**संकेतकौमुद्यां** तु शिवमतमनुवदन् षड्भावा उक्ताः लेखकेन । तत्र **मुदित** इति संज्ञासाम्येऽपि व्याख्याभेदो वर्तते । सारावलीकारः **स्वगृहे-मित्रगेहे** वा स्थितः **मुदित** इति परिभाषते । किन्तु संकेतकौमुदीकारः—

**मित्रगेहे मित्रयुक्तो मित्रेण च विलोकितः ।**
**गुरुणा सहितो यश्च मुदितः स प्रकीर्तितः ।।** (१।७)

इति व्याख्याति ।

अन्यच्च **क्षोभितविकलयोश्चार्थसाम्यात्** संज्ञा साम्यं कल्प्यते चेत्तदापि व्याख्याभेदान्नास्ति संगतिः । **'विकलः रविलुप्तकरः'** इति **सारावलीवचनम्** । तेन हि जन्मकालेऽस्तंगताः ग्रहाः विकला इति संज्ञायन्ते । किन्तु संकेत-**कौमुद्यां**—

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

रविणा सहितो यश्च पापा पश्यन्ति सर्वथा ।
क्षोभितं तं विजानीयाच्छत्रुणा यदि वीक्षितः ।।
(१।८)

इति । अनयोर्विशेषः स्पष्ट एव ।

एवं हि परम्पराभेदेन संज्ञाकरणमस्ति ग्रन्थकारस्य । तत्तल्लब्ध-संज्ञानां ग्रहाणां सामान्यफलनिर्देशानन्तरं मेषादिराशिस्थितानां तेषां **शयनोपवेशननेत्रपाणिप्रकाशनगमनेच्छागमनसभायांवसत्यागमभोजननृत्य-लिप्साकौतुकनिद्राख्याः** ग्रहभावाः वर्णिताः । तेषां शयनादिग्रहभावाना-मानयनक्रमवर्णनावसर एव **दृष्टिचेष्टाविचेष्टा** अपि वर्णिताः । येन भाव-फलानयने सौकर्यं स्यात् । एतदर्थं **यस्मिन्नृक्ष-**इत्यारभ्य **कथितामुनिपुङ्गवैः** इत्यन्तेन सिद्धान्तः निगदितः ।

द्वादशभावस्थग्रहाणां सामान्यं फलं निर्दिश्य तत्तद्भावस्थरविफल-कथनेनाध्यायपरिसमाप्तिः ।

द्वितीयादि पञ्चमाध्यायपर्यन्तं क्रमेण चन्द्रभौमबुधजीवशुक्र-शनिराहूणां विविधभावापन्नानां फलं सम्यङ्निगदितम् । सामान्येन जातकग्रन्थेषु ग्रहभावानां नास्ति विचारः किन्तु ग्रहभावविचारका अपि प्रत्नाः विद्वांसः आसन्निति ग्रन्थकारः स्वीकरोति—

**ज्योतिर्विद्भिः पुरा सर्वैर्ज्ञायते तत्त्वनिर्णयः ।**
**इदानीं सूक्ष्मरूपेण शयनादिर्निगद्यते ।।** इति ।
(१।४०)

**अपिच—**

**नानाशास्त्रं समालोड्य क्रियते ग्रन्थसंग्रहः ।।**इति ।
(५।५४)

अल्पायाससाध्यत्वात्पूर्णत्वाच्चायं ग्रन्थः दवज्ञानां भूषणं भवेदिति कल्पयामि ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ग्रन्थकर्तुर्विवरणम्

**श्रीहरिनाथचार्य**कृतेयं **संकेतकौमुदी**ति मातृकायाः पुष्पिकायां विलिखितं लिपिकारेण। नातिप्रथितकीर्तिरस्त्ययमाचार्यः। किञ्च **हरिनाथ** इति लब्धाभिधानाः नैकाः सन्त्याचार्याः। यथाहि धर्मशास्त्रनिवन्धकर्तुर्मुकुन्दराजस्य परमगुरुः हरिनाथ आसीत्। **भगवन्नामकौमुदी**ति टीकाकारः कश्चिद्**धरिनाथ** एव। येन लोलिम्वराजकृत**वैद्यजीवनस्य** टीका विरचिता। असौ **हरिनाथः लक्ष्मीदासस्य** प्रपौत्रः **मनोहरस्य** च पुत्र आसीदिति प्रसिद्धिः। अन्यश्च **स्मृतिसारस्य** रचयिता हरिनाथः प्रसिद्ध एव। तस्य वचनानि **रघुनन्दनभट्टाचार्येण** (१४२०-१५७० ई०) **उद्वाहतत्त्वाख्ये** ग्रन्थे वहुश उद्धृतानि। **दुर्गोत्सवविवेके**ऽपि **स्मृतिसारस्य** वचनमुपलभ्यते।

यो हि **स्मृतिसारकारः** हरिनाथः स एव **संकेतकौमुदी**ति ग्रन्थस्यापि निर्मातेति **थेयोडोरस आउफरेष्टेन संकेतकौमुद्याः** विवरणप्रसङ्गे परोक्षरूपेणोररीकृतम्।

किञ्चासौ **हरिनाथः** प्राधान्येन गौडानां आचारवर्णने दत्तावधानः महामहोपाध्यायविरुदभागासीत्। तस्माद्धेतोः मैथिलोऽयमा**सीद्धरिनाथोपाध्यायः** इत्यनुमिनोति **पाण्डुरंगवामनकाणे** (ध० शा० का इति० भा० १, पृ० ८५)। कालश्चास्य त्रयोदशशतीति तेनैव निरधारि।

अन्योऽपि **हरिनाथः विश्वधराचार्यस्य** पुत्रः **काव्यादर्शमार्जनस्य सरस्वतीकण्ठाभरणमार्जनस्य** च रचयितासीत्। **संकेतकौमुदीकारेणैव संतानदीपिकेति** ग्रन्थस्यापि प्रणयनं विहितम्। सोऽपि ग्रन्थः नोपलभ्यते। ब्यूह्लरस्य सूचीपत्रे तस्य सत्तैव प्रतिपादिता।

एतेषु **हरिनाथा**भिधानेष्वन्यतमं गृहीत्वा **आउफरेष्टेन संकेतकौमुदीस्मृतिसार**योरेकव्यक्तिकर्तृत्वं स्वीकृतम्। तस्माद् विवरणविशेषस्यानुपलम्भादापाततः **हरिनाथोपाध्याय** एव प्रकृतग्रन्थकर्तृपदमाढौकते। किन्तु तथ्यपरीक्षणेन नायं पक्षः गरीयान् प्रतीयते। कथमिति चेदुच्यते—

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

१. **स्मृतिसारस्य** प्रणेता **हरिनाथः** मैथिल आसीत् । तस्य ग्रन्थे गौडानामाचारः वर्णितः । चेत्तेनैव **संकेतकौमुदी**विरचिता तर्हि**स्मृतिसारवत्** तस्यापिमातृका भारतस्य पूर्वस्मिन् भागे मिथिलादि प्रान्तेषु परिचिता स्यात् । किन्तु न तथा । सर्वा अपि मातृकाः पश्चिमे भारत एव सन्ति ।

२. **संकेतकौमुदीकार** नासीन्महामहोपाध्यायः । न च पुष्पिकायां तथा विलिखितम् यथा रघुनन्दनेन स्वकीये निवन्धे । (**उद्वाहतत्वम्** पृ० ८, १५)

३. **संकेतकौमुद्याः** शारदाक्षरमातृकायाः ग्रन्थपरिसमाप्तिश्लोकाज्ज्ञायते यदसौ ग्रन्थकार आलङ्कारिक आसीन्नतथा **स्मृतिसारकर्तुः** प्रसिद्धिः ।

४. **संकेतकौमुद्याः** रचनाकालः १६२४ शकाब्द उक्तः तस्मिन्नेव श्लोके । तस्मात् संकेतकौमुदीस्मृतिसारकारयोर्महान्कालभेदाद् भेदः स्पष्ट एव ।

कुत्रत्य आसीत् **संकेतकौमुदी**कारः इति प्रश्नः प्रमाणानुपलम्भादसमाहित एवतिष्ठति ।

नागराक्षरमातृकायां लिपिकारेण लिखितं—**'अथाद्भुतसागरे संकेतकौमुदी लिख्यते**।' इति **स्याद्धरिनाथो** कंचिन्महान्ग्रन्थ**मद्भुतसागराख्यं** प्रणिनाय । तस्यैवाङ्गभूतोऽयं ग्रन्थः पृथक्तया प्रचारितोऽभूत् । **हरिनाथ**विरचितस्या**दभुतसागरस्य** एका एव मातृका लाहौरदेशे कदाचिद् दृष्टासीत् । विवरणं च A Catalogue of Sanskrit Manuscripts in the Punjab University Library, Lahor, Vol II, 1914 A. D. इति सूचीपत्रे प्राकाश्यं नीतम् । इदानीं कुत्रास्ति स ग्रन्थ इति दैवो जानाति । कृतेऽपि पत्राचारे उत्तरं नोपलब्धं लाहौरतः ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शारदाक्षरमातृकायाः पुष्पिकायां लिपिकारेण ग्रन्थरचनाकाल-कथनावसरे—

**अलङ्करणेन साधं जाता संकेतकौमुदी** इति विलिखितम्। अनेन वाक्येन **संकेतितं** भवति यत् कश्चिदलङ्कारशास्त्रीयोऽपि ग्रन्थः तस्य स्यात्। **'अलङ्कारशेखर'** इति कश्चिद् ग्रन्थः केनापि **हरिनाथेन** विरचितः। ग्रन्थ-स्यास्यानन्या मातृकास्तीति Oxford Catlogus Codicum Sanscriticarum, Bibliothecae Bodllianae, Confecit 1864 A. D. इति सूचीग्रन्थे आउफरेष्टेनैव विवृतम्।

द्वयोः ग्रन्थयोरनुपलब्धत्वादुपलब्धिसाधनाभावाद्वा निश्चयेन वक्तुं न पारयत्ययं जनो यत् स एवायं **हरिनाथः** येन **संकेतकौमुदी** रचितेति।

अथ **संकेतकौमुदी** हरिनाथकृताद्भुतसारस्यांशभूतेति निर्णयसागर-प्रेसधृतहस्तनिर्मितमातृकासूच्यामप्युल्लिखितम्। किन्तु स **ग्रन्थोऽद्भुत-सागराभिधान** एवासीन्न**त्वद्भुतसार** इति। *ग* कारलोपस्तु लिपिकप्रमाद-फलम्; **हरिनाथकृताद्भुतसागरस्य** ज्ञातत्वात् नागराक्षरमातृकायाम**द्भुत-सागर** इति शब्दप्रयोगाच्च। ग्रन्थस्यास्य प्रचाराभावात् प्रतिलिपिविरहाद्वा न कोऽपि समुद्दधार। इयमेव गतिर्भवति प्रतिलिपिपरम्पराभावे ग्रन्थानां यथाहि **डॉ० गयाचरणत्रिपाठिवर्यैः 'संस्कृतपाठालोचन के सिद्धान्त'** इति लेखे विलिखितम्—

**"यदि किसी ग्रन्थ की प्रतिलिपि एवं पुनः प्रतिलिपि नहीं हुई तो ढाई सौ वर्षों में उसकी कृति सदा सर्वदा के लिए विस्मृति के गर्त में लीन हो जाती है।"**

**(उशती, इलाहाबाद, १९९२ पृ० ७)**

**इत्यद्भुतसारस्याद्भुतसागरस्य** वा प्राप्त्यभावे **हरिनाथाचार्यस्य** प्रत्यभिज्ञाने **संकेतकौमुद्याश्चांशत्वपरिज्ञाने** महत्काठिन्यं वर्तते।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## मातृकापरिचयः

ग्रन्थोऽयं मातृकाद्वयमाधारीकृत्य सम्पादितः। प्रथमा कश्मीरप्रान्ते वर्तते। सा हि पूर्णा शुद्धतरा च वर्तते। द्वितीया उत्तरप्रदेशस्य लखनऊ-भुक्तेर्ग्रामाद्विद्यापीठीययोजनायां मातृकान्वेषणावसरे लब्धा। उभेऽपि मातृके मयैवानीतेति सुखकरम्। कश्मीरतः माइक्रोफिल्मरूपेण लखनऊतश्च साक्षाद्रूपेण।

आधारमातृकात्वात् शुद्धतरात्वात् प्राचीनात्वाच्च कश्मीरीया-मातृका प्रथमा स्यात् किन्तु केनापि हेतुना तस्याः संकेताक्षरः 'ख' इति प्रयुक्तः।

द्वितीया 'क' इत्यक्षर संकेतेन वोध्या नागरक्षरै विलिखिता ४'×१०' इत्याकारा प्रायेणशुद्धा क्वचिदतिरिक्तपाठान् विभ्रती इदानीं अस्माकं मातृकागारे सुरक्षिता वर्तते।

'ख'—मातृका शारदादेशे श्रीनगरे श्रीनगरविश्वविद्यालयस्य 'शोध एवं प्रकाशन' विभागीयमातृकागारे सुरक्षिताप्यसुरक्षिता वर्तते। दैवाद् भारतसर्वकारनिर्देशेन राष्ट्रीयसंस्कृतसंस्थानस्य कश्मीरदेशेऽसुरक्षितानामनर्घानां मातृकाणां माइक्रोफिल्मनिर्माणयोजनायां माइक्रोफिल्मनिर्माणव्यापृतेन मयेयं मातृका दृष्टा छायाङ्किता च जाता। इयं शारदाक्षरैरनतिप्राचीने कर्गदे स्थूलाक्षरैर्विलिखिता वर्तते।

अस्या मातृकायाः कालः नोल्लिखितः यद्यपि ग्रन्थ परिसमाप्त्यवसरे लिपिकारेण एकः श्लोक विलिखितः तदनुसारं १६२४ शकवत्सरे ग्रन्थ-परिसमाप्तिर्जाता। अयं ग्रन्थकालत्वेन स्वीकृतः लिपिकालस्त्वाज्ञात एव।

## कार्तज्ञम्

ग्रन्थस्यास्य सम्पादने राष्ट्रभाषयानुवदने प्रकाशने चास्माकं गुरवः

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**डॉ० गयाचरण त्रिपाठिवर्याः** सम्प्रति विद्यापीठस्य प्राचार्याः **एव प्रेरकाः** सन्तीति तेषां चरणयोः हार्दं कार्तज्ञं ज्ञापयन्नात्मानं धन्यं मन्ये ।

ये विद्वांसस्सन्ति ग्रन्थचयनसमितेः तान् प्रत्याभराम्याधमर्ण्यं यत् ते सुदुर्लभामदृष्टपूर्वां मातृकामनतिविलम्बेनैव सानुवादां प्रकाशनार्थं स्वीकृतवन्तः ।

ग्रन्थोऽयं भारतसर्वकारस्य शिक्षामन्त्रालयस्य दुर्लभाप्रकाशितग्रन्थ-प्रकाशनयोजनायां प्राकाश्यं नीतः । तदर्थं वित्तप्रदानादिना मन्त्रालयाधि-कारिणोऽप्युपकृतवन्तः । तेऽपि साधुवादार्हाः धन्यवादार्हाश्च ।

प्रयागस्य प्रतिष्ठितः दैवज्ञः **पं० उमराव पाण्डेयः** (आचार्यः, धर्म-ज्ञानोपदेशसंस्कृतविद्यालये प्रयागस्थे) ग्रन्थग्रन्थिविशरणे महत्साहाय्येना-चरितवान् । तं प्रत्यपि धन्यवादं ज्ञापयामि ।

शाकुन्तलमुद्रणालयाधिष्ठातृणा **श्रीमता उपेन्द्रत्रिपाठिना**त्यल्पसमय-व्ययेन ग्रन्थोऽयं मुद्रितः । तदर्थं तं सपरिकरं साधुवादान् व्याहरामि ।

ग्रन्थे यास्त्रुटय अपरिमार्जितास्तिष्ठन्ति ताः विद्वद्भि संकेतितव्याः येन द्वितीये संस्करणे तासां परिमार्जनं स्यादिति भृशं निवेदन् विरमति—

रामनवम्यां
गुरुवासरे
२०५० वैक्रमाब्दे

**प्रकाशपाण्डेयः**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अथ

# संकेतकौमुदी

## ।। प्रथमोऽध्यायः ।।

—:०:—

।। अथ षट्भावनिरूपणम् ।।

ग्रहाणां षड्विधा[1] भावाः[2] शम्भुना गदिताः पुरा ।
एतत् सर्वं प्रयत्नेन लिख्यते च मयाधुना ।।१।।

लज्जितो गर्वितश्चैव क्षुधितस्तृषितस्तथा ।
मुदितः क्षोभितश्चैव ग्रहभावाः प्रकीर्तिताः ।।२।।

यत्र[3] गेहगतः[4] खेटो राहुयुक्तो यथा तथा ।
रविमन्दकुजैर्युक्तो लज्जितो ग्रह एव सः ।।३।।

तुङ्गस्थानगतो वापि त्रिकोणेऽपि भवेत्पुनः ।
स गर्वितो[5] निगदितो मुनिभिः कृतनिश्चयैः ।।४।।

शत्रुगेहे शत्रुयुक्तो रिपुदृष्टो भवेद्यदि ।
क्षुधितः स च विज्ञेयः[6] शनियुक्तो यथा तथा ।।५।।

---

१. षड्धा, ख । ३. पुत्र, क । ५. गर्वितो स, क ।
२. भावाश्च, ख । ४. गताः, क । ६. विज्ञेया, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

श्री

# संकेतकौमुदी

## (हिन्दी अनुवाद)

### ।। प्रथम अध्याय ।।

—:०:—

१. भगवान् शंकर ने प्राचीन समय में ग्रहों के ६ प्रकार के भावों का वर्णन किया था। उन सभी को अब प्रयत्न पूर्वक लिखा जा रहा है।

२. छः ग्रहभावों को इन नामों से पुकारा जाता है—लज्जित, गर्वित, क्षुधित, तृषित, मुदित एवं क्षोभित।

३. जो ग्रह सूर्य, शनि अथवा मंगल के साथ हो अथवा स्वगृही होकर राहु के साथ हो उसे लज्जित ग्रह कहते हैं।

४. जो ग्रह उच्चराशि में स्थित हो या त्रिकोण में स्थित हो उसे मुनियों ने गर्वित नाम से पुकारा है।

५. शत्रुग्रह के स्थान पर स्थित या शत्रुग्रह के साथ अवस्थित, या शत्रुग्रह की दृष्टि से युक्त अथवा जिसके साथ शनि की युति होती है, ऐसे ग्रह को क्षुधित ग्रह समझना चाहिए।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

जलराशौ स्थितः खेटः शत्रुणा चावलोकितः ।
शुभग्रहा न पश्यन्ति तृषितः स उदाहृतः ।।६।।

मित्रगेहे मित्रयुक्तो मित्रेण च विलोकितः[1] ।
गुरुणा सहितो यश्च मुदितः स प्रकीर्तितः ।।७।।

रविणा सहितो यश्च पापाः पश्यन्ति सर्वथा ।
क्षोभितन्तं विजानीयच्छत्रुणा यदि वीक्षितः ।।८।।

येषु येषु च भावेषु ग्रहास्तिष्ठन्ति सर्वथा ।
क्षुधितः क्षोभितो वापि स नरो दुःखभाजनम्[2] ।।९।।

एवं क्रमेण बोद्धव्यं[3] सर्वभावेषु पण्डितैः[4] ।
बलाबलविचारेण वक्तव्यः[5] फलनिर्णयः ।।१०।।

अन्योन्यं च यदा[6] युक्तं फलं[7] भिन्नं वदेत्पुनः ।
बलहीने तथा[8] हानिः सबले च महाफलम् ।।११।।

कर्मस्थाने स्थितो यस्य लज्जितस्तृषितस्तथा ।
[9]क्षुधितः क्षोभितो वापि स नरो दुःखभाजनम्[10] ।।१२।।

सुतस्थाने भवेद्यस्य लज्जितो ग्रह एव च ।
सुतनाशो भवेत्तस्य एकस्तिष्ठति सर्वथा ।।१३।।

---

१. चावलोकितः, क । ५. वक्तव्यं, ख । ८. यथा, क ।
२. भाजनः, क । ६. मुदा, ख । ९. क्षुधेतः, क ।
३-४. कीटभक्षितोऽयं पाठः क । ७. फलमिश्रं, क । १०. भाजनः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

६. जो ग्रह जलीय राशियों में स्थित हो एवं उस पर शत्रु ग्रह की दृष्टि हो तथा किसी शुभग्रह की दृष्टि न हो, उसे तृषित ग्रह कहते हैं।

७. जो ग्रह मित्रग्रह के स्थान में स्थित हो, या उस पर मित्रग्रहों की दृष्टि हो, या गुरु के साथ युति हो, उसे मुदित कहा गया है।

८. जिस ग्रह के साथ सूर्य हो एवं उस पर पापग्रहों की दृष्टि हो या शत्रुग्रहों की दृष्टि हो, उसे क्षोभित ग्रह समझना चाहिए।

९. क्षुधित या क्षोभित ग्रह जिस भी भाव में स्थित होंगे, वे जातक के लिए सदा दुःखदायी ही होंगे।

१०. पण्डितों को यही क्रम सभी भावों में स्थित ग्रहों के सम्बन्ध में समझना चाहिए। ग्रहों के बल एवं दुर्बलता का विचार करके फल के विषय में निर्णय देना चाहिए।

११. यदि इस प्रकार के दो या अनेक ग्रह परस्पर संयुक्त हों या एक दूसरे को प्रभावित करने की स्थिति में हों तब इनका फल दूसरे प्रकार का होगा। उस स्थिति में जो ग्रह बलवान् होगा उसी का फल प्रधान कहा जायेगा। निर्बल शुभग्रह भी हानिकारक होगा किन्तु सबल होने पर अत्यधिक फलदायी होगा।

१२. जिस जातक के कर्म स्थान में लज्जित, तृषित, क्षुधित या क्षोभित ग्रह होंगे वह दुःखी होगा।

१३. जिसके पुत्रस्थान में लज्जित ग्रह स्थित होगा उसके अनेक पुत्रों की सम्भावना कम होगी, केवल एक ही पुत्र जीवित रहेगा।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

क्षोभितस्तृषितश्चैव सप्तमे यस्य वा भवेत् ।
म्रियते तस्य नारी च सत्यमाह दिगम्बरः ।।१४।।

।। इति षड्भावाः ।।

।। अथ ग्रहाणां भावकथनम् ।।

अथ[1] द्वादशभावाश्च प्रोक्तव्यास्ते प्रयत्नतः ।
ग्रहाणां च बलं बुद्ध्वा[2] फलं वक्ष्ये यथाक्रमम् ।।१५।।

शयनं चोपवेशं च नेत्रपाणिप्रकाशने[3] ।
गमनेच्छा च गमनं सभायां वसतिस्तथा ।।१६।।

आगमो भोजनं चैव नृत्यलिप्सा च कौतुकम् ।
निद्रा ग्रहाणां चेष्टा च कथिता पूर्वसूरिभिः ।।१७।।

।। भावानयनक्रमः ।।

यस्मिन्नृक्षे स्थितः खेटस्तेन तं परिपूरयेत् ।
पुनरंशेन संपूर्य स्वनक्षत्रं नियोजयेत् ।।१८।।

यातदण्डं तथा लग्नमेकीकृत्य सदा बुधैः ।
रविणा विहरेद्भागं शेषं कार्ये नियोजयेत् ।।१९।।

।। दृष्ट्याद्यानयनक्रमः ।।

नक्षत्रार्क[4] दशाक्रमेण पुनः पूरणमाचरेत् ।
नामाक्षरेण संयुक्तं हर्तव्यं रविणा ततः ।।२०।।

---

१. अन्ये, ख । ३. नेत्रपाणिः प्रकाशकः, क ।
२. बुद्धा, ख । ४. नाक्षत्रिक, ख' ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

१४. सप्तमभाव में क्षोभित या तृषित ग्रह होने पर दिगम्बर शिव के कथनानुसार स्त्री की हानि होगी।

।। ग्रहभावनिरूपण ।।

१५. अव प्रयत्न पूर्वक १२ भावों एवं उनमें स्थित ग्रहों का फल उनके वल आदि का ज्ञान करके वताया जायेगा।

१६.—१७. वारह भावों के नाम इस प्रकार है—१. शयन २. उपवेश ३. नेत्रपाणि ४. प्रकाशन ५. गमनेच्छा ६. गमन ७. सभावास ८. आगम ९. भोजन १०. नृत्यलिप्सा ११. कौतुक १२. निद्रा। ये १२ नाम प्राचीन विद्वानों ने वताये हैं।

ग्रहों के इन भावों को ज्ञात करने की विधि इस प्रकार है—

१८—१९. जिस राशि में ग्रह स्थित है उस राशि का क्रमांक एवं ग्रह का क्रमांक आपस में जोड़ कर, योग में पुनः अंश = ९ जोड़ना चाहिए। पुनः योग में ग्रह के अपने जन्म नक्षत्र का क्रमांक जोड़ना चाहिए। इसके पश्चात् भयात एवं लग्न को भी जोड़ कर १२ से भाग देना चाहिए। इस परिकर्म में शेषांक क्रमशः ग्रह के शयन आदि भाव का द्योतक होगा।

२०.—२३. इन ग्रहभावों का फल उनकी दृष्टि, चेष्टा एवं विचेष्टा पर भी निर्भर है। इसके ज्ञान के लिए पुनः निम्न परिकर्म करना चाहिए—

पूर्व प्राप्त योग में पुनः ग्रह की जिस नक्षत्र पर स्थिति हो उसके क्रमांक को जोड़ कर, उस ग्रह के नामाक्षरों की संख्या जोड़ कर १२ से भाग देना चाहिए। शेष में क्षेपकाङ्कों को जोड़ना चाहिए। प्रत्येक ग्रह के क्षेपकाङ्क निम्न हैं—

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

[1]रवौ पंच तथा देयं[2] चन्द्रे दद्याद् द्वयं तथा ।
कुजे द्वयं च संयोज्य[3] बुधे त्रीणि[4] नियोजयेत् ।।२१।।

गुरौ बाणाः[5] प्रदेयाश्च त्रयं दद्याच्च भार्गवे ।
शनौ त्रय[6]मथो देयं राहौ दद्याच्चतुष्टयम् ।।२२।।

एवं ग्रहाणां संयोज्य क्षेपकाङ्कान् क्रमात् सुधीः[7] ।
शेषं हृतं च रामेण ग्रहाणां त्रिविधं भवेत् ।
दृष्टिश्चेष्टा विचेष्टा[8] च कथिता मुनिपुङ्गवैः ।।२३।।

।। दृष्ट्यादीनां फलकथनम् ।।

दृष्टौ[9] स्वल्पं फलं ज्ञेयं चेष्टायां विपुलं[10] फलम् ।
विचेष्टायां फलं न स्यादेवं दृष्टिफलं विदुः ।।२४।।

शुभाशुभग्रहाणां च समीक्ष्याथ बलाबलम् ।
तुङ्गस्थाने विशेषेण बलं ज्ञेयं तथा बुधैः[11] ।।२५।।

।। शुभाशुभग्रहाणां भावफलम् ।।

निद्रायां च यदा पापो जायास्थाने[12] शुभं वदेत् ।
यदि पापग्रहैर्दृष्टो न शुभं च कदाचन ।।२६।।

---

१. रवो, क ।
२. द्वेया, क ।
३. संयुक्तं, 'क' ।
४. त्रयं, क
५. बाणाप्रदद्याच्च, क ।
६. वयं तथा, क ।
७. अतिरिक्ता पंक्तिः, क ।
८. विचेष्टाश्च, क ।
९. दृष्टे, ख ।
१०. विफलं,'क' ।
११. बुधः, ख ।
१२. स्थानं, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

| ग्रह नाम | क्षेपक संख्या |
|---|---|
| १. सूर्य | ५ |
| २ चन्द्र | २ |
| ३. मंगल | २ |
| ४. बुध | ३ |
| ५. बृहस्पति | ५ |
| ६. शुक्र | ३ |
| ७. शनि | ३ |
| ८. राहु एवं केतु | ४ |

इसके पश्चात् ३ से भाग देकर शेष ज्ञात करना चाहिए। इसके क्रमशः १, २, ३ होने पर मुनियों के अनुसार ग्रह की क्रमशः **दृष्टि, चेष्टा** एवं **विचेष्टा** का ज्ञान होता है।

२४. ग्रह की **दृष्टि** अवस्था होने पर उसके शयन आदि भाव का फल कम होता है, **चेष्टा** अवस्था में अधिक एवं **विचेष्टा** होने पर कोई फल नहीं होता। इस प्रकार **दृष्टि फल** का ज्ञान मुनियों ने किया था।

२५. ग्रहों के शुभ-अशुभ स्वरूप का एवं बल आदि की समीक्षा कर लेनी चाहिए। ग्रह उच्चस्थ होने पर अधिक बलशाली होता है।

२६. पापग्रह यदि **निद्रा** भाव में हो तथा **जाया** के स्थान में स्थित हो, तो शुभकारक होता है। किन्तु यदि उस पर किसी पाप ग्रह की दृष्टि होगी तब शुभ फल नहीं देगा।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यदि वा शत्रुगेहे स्याद्रिपुणा यदि वीक्षितः ।
तदा नारी मृता तस्य सकला च सुनिश्चितम्[1] ।।२७।।

शुभग्रहैर्यदा दृष्टः शुभग्रह[2] समन्वितः ।
नारी च म्रियते तस्य प्रथमा च विशेषतः ।।२८।।

सुतस्थाने स्थितः पापो निद्रायां शयनेऽपि वा ।
तदा शुभं भवेत्तस्य नात्र कार्या विचारणा ।।२९।।

तुङ्गस्थाने स्वगेहे वा त्रिकोणे वा यदा भवेत् ।
अपत्यस्य तदा नाशो जायते नात्र संशयः ।।३०।।

शुभग्रहो यदा तत्र शुभैर्वा यदि वीक्षितः ।
तदापि[3] प्रथमापत्यनाशो भवति निश्चितम् ।।३१।।

मृत्युस्थाने स्थितः पापो निद्रायां शयनेऽपि वा ।
तदा तस्यापमृत्युः स्याद्राजतः परतस्तथा ।।३२।।

शुभग्रहैर्यदायुक्तः शुभैर्वा यदि वीक्षितः ।
तदा च मरणं तस्य गङ्गायां च विशेषतः ।।३३।।

पापग्रहैर्यदा दृष्टः शुभैर्वा[4] शत्रुवीक्षितः ।
तदा तस्य शिरश्छेदो मुनिना परिकीर्तितः ।।३४।।

---

१. सुनिक्षितम्, क । २. सौम्य, क ।
३. तत्रापि, क । ४. शुभेषा, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२७. अथवा उक्त ग्रह शत्रु गृह में स्थित हो एवं उस पर शत्रु ग्रह को दृष्टि भी हो तव जातक की पत्नी के लिए दोष होगा।

२८. वही ग्रह यदि शुभग्रहों के साथ या उनसे दृष्ट हो तव भी पत्नो की हानि होती है। विशेष रूप से पहली पत्नी की।

२९. यदि पापग्रह **निद्रा** या **शयन** भाव में सुत स्थान में स्थित हो तो निश्चित रूप से शुभ फल देगा।

३०. किन्तु यदि वह **उच्चस्थ, स्वगृही** या **त्रिकोण** में स्थित होगा तव पुत्र के लिए हानिकारक होगा।

३१. यदि वहीं पर शुभ ग्रह भी हों या उस स्थान पर शुभ ग्रहों की दृष्टि हो तव भी प्रथम पुत्र के लिए अशुभ होगा।

३२. **शयन** या **निद्रा** भाव में पापग्रह यदि **मृत्यु-स्थान** में स्थित हो तो जातक की राजा या किसी अन्य शत्रु के कारण अकालमृत्यु होती है।

३३. किन्तु शुभग्रहों से युक्त या दृष्ट होने पर उसकी मृत्यु किसी पुण्य-क्षेत्र में, विशेषतः गङ्गा में होती है।

३४. उसी ग्रह पर यदि पापग्रह की दृष्टि हो या शत्रु शुभग्रह की दृष्टि हो तब मुनियों के कथनानुसार जातक की मृत्यु सर कटने से होती है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अष्टमस्थो शनिकुजौ तमो वा तत्र संस्थितः ।
अपमृत्युर्भवेत्तस्य शिरश्छेदान्न[1] संशयः ।।३५।।

कर्मस्थाने यदा पापः[2] शयने भोजनेऽपि वा ।
तदा दारिद्र्यदोषेण[3] कृत्स्नां भ्रमति मेदिनीम् ।।३६।।

कर्मस्थाने शुभः खेटो निद्रायां गमनेऽपि वा ।
तदा कर्मविपाकः स्यान्नानादुःखप्रदायकः ।।३७।।

दशमस्थो निशानाथः कौतुकी च प्रकाशने ।
तदैव राजयोगस्यान्मुनिभिः परिकीर्तितः ।।३८।।

एवं क्रमेण बोद्धव्यं सर्वभावेषु देहिना[4] ।
बलाबल विचारेण ज्ञायते च शुभाशुभम् ।।३९।।

ज्योतिर्विद्भिः पुरा सर्वैर्ज्ञायते तत्त्वनिर्णयः ।
इदानीं सूक्ष्मरूपेण शयनादिर्निगद्यते[5] ।।४०।।

शयनाद्येषु[6] भावेषु यस्य तिष्ठन्ति[7] सद्ग्रहाः ।
नित्यं[8] तस्य शुभं ज्ञानं[9] मुनिभिः परिकीर्तितम्[10] ।।४१।।

---

१. शिरश्छेदो, क ।
२. पापाः, ख ।
३. शरीर, क ।
४. देहिनां, क ।
५. शयनानि च गद्यते, क ।
६. शयनाधेक, क
७. तिष्ठत्रि, क ।
८. नौत्यं, क ।
९. नित्यं क्लेशं श[जा]तस्य, क
१०. परिकोर्तितः, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

३५. शनि, मङ्गल, राहु या केतु यदि अष्टम स्थान में स्थित हों तब भी उक्त ग्रह वाले जातक की सर कटने से अकाल मृत्यु होती है।

३६. **शयन** या **भोजन** भाव वाले ग्रह की स्थिति यदि **कर्म**-स्थान में हो तो जातक दरिद्रता के कारण इधर-उधर भटकता रहता है। उसे आजीविका के लिए देशत्याग करना पड़ता है।

३७. **निद्रा** या गमन भाव वाला शुभग्रह भी यदि **कर्म** स्थान में होता है तो अनेक प्रकार का दुःख देता है।

३८. चन्द्रमा यदि **कौतुक** या **प्रकाशन** भाव में **दशमस्थान** में हो तब वह जातक **राजयोग** सम्पन्न होता है। ऐसा मुनियों का कथन है।

३९. इसी प्रकार सभी भावों के ग्रहों का उनके वलावल के अनुसार शुभ या अशुभ फल का ज्ञान किया जाता है।

४०. प्राचीनकाल के ज्योतिर्विद् इसका सम्पूर्ण ज्ञान रखते थे। यहाँ पर संक्षेप में **शयन** आदि के विषय में वताया जा रहा है।

४१. मुनियों का कथन है कि जिस जातक के शुभग्रह **शयन** आदि भाव-सम्पन्न होते हैं उनका अवश्य ही शुभ होता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भोजनाद्येषु[1] भावेषु पापास्तिष्ठन्ति सर्वथा ।
तदा सर्वविनाशोऽपि नात्रकार्या विचारणा ॥४२॥

॥ अथ रविभावफलम् ॥

मन्दाग्निः पित्तशूली च श्लीपदी च न संशयः ।
गुह्यस्थाने भवेद्रोगो जायते शयने रवौ ॥४३॥

उपवेशे भवेच्छिल्पी[2] श्यामवर्णो भवेन्नरः ।
सद्विद्यारहितो दुःखी परसेवासु तत्परः ॥४४॥

पञ्चमे नवमे[3] वापि दशमे सप्तमेऽपि वा ।
नेत्रपाणौ[4] यदा सूर्यः सर्वसौख्यसमन्वितः ॥४५॥

नेत्रपाणौ भवेत्क्रूरो जलदोषी भवेन्नरः ।
चक्षुरोगी महाक्रोधी परद्वेषी तथा पुनः ॥४६॥

पुण्यवान्धार्मिकश्चैव[5] धनवांश्च प्रकाशने ।
दाता भोक्ता भवेन्मानी राज्यपुत्रधनाधिपः[6] ॥४७॥

सप्तमे पञ्चमे वापि प्रकाशे च यदा रविः ।
नाशयेत्प्रथमापत्यं कलत्रं च विशेषतः ॥४८॥

प्रवासी[7] गमने भानौ पादमूले[8] रुजान्वितः ।
निद्रालस्य भयक्रोधो जायते च नराधिपः ॥४९॥

---

१. भोजनाद्येक, क ।
२. भवेत् शिल्पी, क ।
३. भवने, क ।
४. नेत्रपाणे, क ।
५. धर्मक, क ।
६. राजपुत्रो, क ।
७ प्रवासे, ख ।
८. यदा, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

४२. इसी प्रकार **भोजन** आदि भावसम्पन्न पापग्रह सर्वथा विनाश का कारण बनते हैं ।

।। सूर्य के भावों का फल ।।

४३. **शयन** भाव में सूर्य के होने पर जातक मन्दाग्नि, पित्तजशूल, श्लीपद एवं गुप्ताङ्गों के रोग से आतुर होता है ।

४४. **उपवेश** भाव में होने पर जातक श्यामवर्ण, शिल्पशास्त्री, उत्तम विद्याओं से हीन, दुःखी एवं परोपकारी होता है ।

४५. **नेत्रपाणि** भावयुक्त सूर्य यदि **पाँचवें, सातवें, नवें** या **दसवें** स्थान में होता है तो जातक सभी प्रकार से सुखी एवं सम्पन्न होता ।

४६. इनके अतिरिक्त स्थानों में **नेत्रपाणि** भाव में होने पर जातक क्रूर होता है । उसे आँखों का रोग होता है । ऐसा जातक महाक्रोधी एवं द्वेषी होता है तथा उसे जल से भय होता है ।

४७. सूर्य के **प्रकाशन** भाव में होने पर जातक पुण्यवान्, धार्मिक, धनवान्, दाता, विलासी, स्वाभिमानी, राजा एवं पुत्रवान् होता है ।

४८. **सातवें** या **पाँचवें** स्थान में स्थित सूर्य यदि **प्रकाश** भाव में हो तब प्रथम पुत्र एवं विशेषतः प्रथम पत्नी की हानि करता है ।

४९. सूर्य के **गमन** भाव में होने पर जातक प्रवासी, आलसी, अधिक सोने वाला, भयभीत एवं क्रोधी होता है । तथा उसके पैर के निचले भाग में रोग होता है ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

क्रूरः कुबुद्धिः कुशलो दाम्भिकः कृपणस्तथा ।
परदारेष्वभिरुचिर्जायते गमनोन्मुखे ।।५०।।

सप्तमे द्वादशे वापि यदि दैवाद्भवेत्क्वचित् ।
अपत्यं नाशयेत्तस्य धनमल्पं च निश्चितम् ।।५१।।

गगनस्थो[1] यदा सूर्यो नवमस्थो यदा भवेत् ।
तदापुण्यैर्महाविघ्नं करोति च न संशयः ।।५२।।

धार्मिको धनवांश्चैव[2] नानाविद्यासु तत्परः ।
प्रियदृष्टिः शुचिर्वक्ता सभास्थे[3] तपने जनः[4] ।।५३।।

क्षोभितो दुःखितश्चैव नानादुःखप्रदायकः ।
भवेन्मूर्खश्च गमने कुरूपो धनवान्भवेत् ।।५४।।

पण्डितः सुन्दरोवाग्मी नृत्योत्साहे[5] ग्रहाधिपे ।
शूलरोगी भवेन्नित्यं धनवान् धार्मिकः सदा ।।५५।।

भोजने नित्यदुःखीस्यान्मांसलुब्धो भवेच्च[6] सः ।
शिरोरोगी कर्णरोगी संधौ भवति वेदना ।।५६।।

षष्ठस्थाने भवेद्वापि कौतुकस्थो यदा रविः ।
सर्वशत्रुविनाशः स्याज्जाड्यं[7] च लभते पुनः ।।५७।।

---

१. गमनस्थो यदा सूर्यो भोजनस्थो यदा भवेत्, क ।
२. क्रोधवांश्चैव, क ।
३. सदस्थे, क ।
४. जनैः, क ।
५. नित्योत्साहो ग्रहाधिपः, क ।
६. भवेच्छसः, ख, भवेद्यशः, क ।
७. जायां, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

५०. **गमनेच्छा** भावयुक्त होने पर जातक क्रूर, कुबुद्धि, प्रवीण, घमण्डी, कृपण, परस्त्रीचिन्तक होता है।

५१. किन्तु **गमनेच्छा** भाव में सूर्य यदि **सप्तम** या **द्वादश** स्थान में स्थित हो तो धनहीन एवं पुत्रहीन वनाता है।

५२. **नवम** स्थान में स्थित होने पर आकाशस्थ सूर्य पुण्य कर्मों में महाविघ्न उत्पन्न करता है।

५३. सूर्य यदि **सभावास** भाव वाला हो तो जातक धार्मिक, धनवान्, अनेक विद्याओं का ज्ञाता, मधुरदृष्टि वाला एवं पवित्रवाणी वोलने वाला होता है।

५४. यही सूर्य यदि **क्षोभित** या **दुःखित** हो तव दुःखदायो होता है। **क्षोभित** या **दुःखित** सूर्य **गमन** भाव मे होने पर जातक को मूर्ख, कुरूप, एवं धनवान् वनाता है।

५५. ग्रहों का स्वामी सूर्य यदि **नृत्यलिप्सा** भाव में हो तो जातक शूल-रोगी, धनवान् एवं धार्मिक होता है।

५६. **भोजन** भाव में होने पर जातक दुःखी, मांसप्रेमी, शिरोरोगी, कर्ण-रोगी एवं सन्धिवात (गठिया) से पीड़ित होता है।

५७. **कौतुक** भाव में सूर्य यदि **छठें** स्थान में हो तो जातक के शत्रुओं का विनाश होता है अथवा वे जड हो जाते हैं अर्थात् कोई हानि नहीं कर पाते।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

उत्साही च महापुत्री कौतुस्थे यदा रवौ ।
दाता भोक्ता महाभोगी द्विभार्यो बहुभाषकः ।।५८।।

चतादिर्वापि देहे स्याद् दद्रु रोगी भवेच्च सः[1] ।
महादक्षो महाक्रोधी जायते स[2] नरोत्तमः ।।५९।।

सप्तमे पञ्चमे वापि यदि दैवाद्[3] भवेत्पुनः ।
कलत्रं नाशयेत्तस्य प्रथमापत्यं[4] च निश्चितम ।।६०।।

लिंगान्तगुदरोगीस्याच्छ्लीपदी[5] च विशेषतः ।
निद्रायां च भवेद् भानौ क्रोधेनारक्तनेत्रकः[6] ।।६१।।

नित्यप्रवासी[7] दुःखी च दरिद्रो विकलो महान् ।
प्रथमापत्यनाशः स्यात् कलत्राणां[8] विशेषतः ।।६२।।

।इति श्री हरिनाथकृतायां संकेतकौमुद्यां भावप्रकरणे
रविभावो नाम प्रथमोऽध्यायः ।।१।।



---

१ दातादेवोपिदेहस्यादुः रोगी भवेत्तु सः, क ।
२. च, क ।
३. दैवो, ख ।
४. प्रथमापत्यनिश्चितम्, क ।
५. स्याश्लीपदो, क ।
६. लोचनः, क ।
७. नित्यं, क ।
८. कालाक्षीणं, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

५८. अन्य स्थानों में स्थित सूर्य के कौतुक भाव में होने पर जातक उत्साही, अनेक पुत्रवान्, उदार, विलासी, दो पत्नियों वाला तथा वहुत वोलने वाला होता है ।

५९. उस पुरुषश्रेष्ठ के शरीर में घाव लगते हैं । वह दद्रुरोगी, अत्यन्त कुशल, एवं महाक्रोधी होता है ।

६०. किन्तु वही सूर्य यदि भाग्यवश **पाँचवें** या **सातवें** स्थान में हो तो स्त्री एवं प्रथम पुत्र का नाश करता है ।

६१. यदि सूर्य **निद्रा** भाव में हो तो जातक को भगन्दर, विशेषतः पीलपाँव होता है । उसकी आँखें लाल होती हैं ।

६२. तथा जातक सदा घर से दूर, दुखी, दरिद्र तथा व्याकुल होता है । उसकी स्त्री एवं प्रथम पुत्र की हानि होती है ।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ॥ द्वितीयोऽध्यायः ॥

—:०:—

॥ अथचन्द्रभावफलम् ॥

ज्ञातव्यं[1] यत्नतो युक्त्या तुंगातुंगबलाबलैः ।
शयने च विधौ क्रोधी दरिद्रो बहुलम्पटः ॥१॥

गुह्यस्थाने[2] भवेत्किञ्चिद्देहमान्द्यं[3] सुनिश्चितम् ।
[4]एतत्सर्वं च विघ्नं च चिन्तनीयं सदा बुधैः ॥२॥

अन्यभावे[5] यदाजातो न तादृग्दोष[6] एव च ।
कृष्णपक्षे भवेद्वापि कृपणो दाम्भिकः सदा ॥३॥

तक्षकश्च महाशूरो लम्पटः परनिन्दकः ।
दक्षिणाङ्गे क्षतादिश्च वह्निना च न संशयः[7] ॥४॥

सर्पभीतिस्तदा[8] ज्ञेया जले चैव महद्भयम् ।
भोजने च विधौ जातो ज्ञातिभिः[9] परिपूरितः ॥५॥

---

१. तुंगातुंगबलैर्वीर्यैर्ज्ञातव्यं यज्ञता धिया, क ।
२. गुदा, क ।
३. दहनाद्यं, क ।
४. एतत्सर्वं विलग्नेन चिन्तयेत्तु सदा बुधैः, क ।
५. भावो, क ।
६. फल, क ।
७. वह्नौ भवति संहयः, क ।
८. तथा, क ।
९. जातिभिः, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ।। द्वितीय अध्याय ।।

—:०:—

१. प्रथमतः उच्च-नीच एवं बलाबल का विधिवत् ज्ञान कर लेना चाहिए। तत्पश्चात् चन्द्रमा यदि **शयन** भाव में हो तो अपने बलाबल, उच्चत्व, नीचत्व के अनुसार जातक क्रोधी, दरिद्र एवं लम्पट होता है।

२. उसके गुप्ताङ्गों में कुछ मन्दता रहती है। बुद्धिमानों को यह सोचना चाहिए कि ये सारे विघ्न उस जातक के जीवन में होते ही हैं।

३. अन्य भाव में रहने पर इस प्रकार के दोष नहीं होते। किन्तु यदि जातक कृष्णपक्ष में उत्पन्न हुआ है तब उक्त चन्द्रमा के कारण वह कृपण एवं दम्भी होता है।

४. वह जातक तक्षक के समान जहरीला, महापराक्रमी, लम्पट, पर-निन्दक होता है। उसके दाहिने अङ्ग में घाव होता है तथा उसे आग से भय होता है।

५. यदि चन्द्रमा **भोजन** भाव में हो तो जातक को सूर्य से भय तथा जल से भय होता है। उसे ज्ञाति बन्धुओं का सुख होता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

दाता भोक्ता तथा मानी धनवांश्च भवेन्नरः ।
क्रूरकर्मा चिरं रोगी श्लीपदी च महाकृशः ।।६।।

नित्यप्रवासी भोगी च जायते हि न [1]संशयः ।
जातोऽसौ नृत्यचेष्टायां गुणवान्धार्मिको भवेत् ।।७।।

धनवान्बहुपुत्रश्च दाता च जायते नरः ।
कौतुके च भवेद्भूपो नानाविद्यासु तत्परः ।।८।।

उत्साही च महामानी जायते च सुनिश्चितम् ।
नवमे दशमे वापि कौतुकस्थो निशाकरः ।।६।।

तदा सर्वसुखं विद्याद्दारिद्र्यं न कदाचन ।
निद्रायां दद्रुरोगी क्लेशी पापी रुजान्वितः ।।१०।।

पुत्रशोकी महादुःखी नित्यं भ्रमति मेदिनीम् ।
कर्मस्थाने विशेषेण एवं ज्ञेयं[3] सदाबुधैः ।।११।।

अन्य भावेषु निद्रायां वैपरीत्यं भवेत्पुनः ।
परद्वेषी प्रवासी च पित्तशूली भवेन्नरः ।।१२।।

कृपणः कुटिलश्चैव दंष्ट्राद्घाती[5] भवेन्नरः ।
उपवेशे च रोगी च धनहीनोभवेन्नरः ।।१३।।

---

१. न च, क ।
२. भवेद्भूपो, ख ।
३. ज्ञेयमेवं, क ।
४. भावेतु, ख ।
५. दंष्ट्राघाती, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

६. वह दाता, भोक्ता, स्वाभिमानी, धनवान्, क्रूर कर्म करने वाला, रोगी, पीलपाँव ग्रस्त एवं दुर्बल होता है ।

७. यदि चन्द्रमा **नृत्यचेष्टा** भाव में है तव जातक घर से दूर, विलासी, गुणी तथा धार्मिक होता है ।

८. चन्द्र के **कौतुक** भाव में होने पर जातक धनवान्, अनेक पुत्रों वाला, उदार एवं अनेक विद्याओं में पारंगत होता है ।

९. कौतुक भाव का चन्द्रमा यदि नवें या दसवें स्थान में हो तो वह व्यक्ति उत्साही एवं स्वाभिमानी होता है ।

१०. उसको सभी प्रकार के सुख मिलते हैं, कभी भी वह दरिद्र नहीं होता ।

**निद्रा** भाव में चन्द्रमा के होने पर जातक दद्रुरोगी, क्लेश-युक्त, पापी एवं रोगी होता है ।

११. उस जातक को पुत्र से कष्ट होता है तथा वह इधर-उधर देश-देशान्तर में भटकता रहता है । जब चन्द्रमा **कर्म** स्थान में हो तब ये फल विशेष रूप में दिखाई देते हैं ।

१२-१३. अन्य भावों (स्थानों) में यदि **निद्रा** भाव का चन्द्रमा हो तब फलविपरीत होता है । वह जातक परद्वेषी, प्रवासी, पित्तजशूली, कृपण, कुटिल एवं दुर्भाग्य से हिंस्र पशु का शिकार हो सकता है । ये फल चन्द्रमा के **उपवेश** भाव में होने पर दिखाई देते हैं ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

नेत्रपाणावच्छिरोगी[1] श्लीपदी बहुभाषकः ।
क्रूरः खलोऽति शूरश्च जायते च विधौ सदा ।।१४।।

प्रकाशने निशानाथे घनवांश्च भवेन्नरः ।
प्रकाण्डदेहः[2] कृपणस्तीर्थे च गमनोन्मुखः ।।१५।।

शुक्लपक्षे[3] ज्ञेयमेवं कृष्णपक्षे तु भिन्नकम् ।
प्रवासी वित्तहीनश्च क्रूरकर्मा विशेषतः ।
शिरोरोगी दन्तशूली[4] जायते गमने विधौ ।।१६।।

नानामतिर्महामानी[5] श्लीपदी च भवेत्पुनः ।
[6]गमेच्छायां विधौ जाते धनहीनो भवेन्नरः ।।१७।।

दाता च धार्मिकश्चैव राजपुत्रो भवेत्सदा ।
सभायां च विधौ नित्यं जायते पुरुषोत्तमः ।।१८।।

बहुभाषी प्रियः शान्तो द्विभार्यो धार्मिकस्सदा[7] ।
किञ्चिद्भवेद्देहमान्द्यं स्त्र्यपत्यं बहुलं भवेत् ।।१९।।

सरुजा च भवेन्नारी चैकपुत्रो[8] भवेच्च सः ।
नित्यक्रोधी महादुःखी भवेदागमने विधौ ।।२०।।

---

१. नेत्रपाणावक्षो, ख ।
२. प्रचण्ड, क ।
३. शुक्ले एवं कृष्ण पक्षे भिन्नम्, ख ।
४. दद्रु, क ।
५. पापी, क ।
६ यानेच्छायां, क ।
७. धार्मिकः सदा, ख ।
८. एक पुत्री, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

१४. चन्द्रमा **नेत्रपाणि** भाव में हों तो जातक आँखों से रोगी, श्लीपदी, वहुत वोलने वाला, क्रूर, खल एवं अतिक्रूर होता है ।

१५. चन्द्रमा **प्रकाश** में हो तो जातक धनवान् पुष्टदेह वाला, कृपण एवं तीर्थ स्थानों का प्रेमी होता है ।

१६. ये फल शुक्लपक्ष में उत्पन्न जातक के लिए होते हैं। कृष्णपक्ष के जातक को निम्न फल मिलता है ।

चन्द्रमा यदि **गमन** भाव में हो तो जातक प्रवासी, गरीब, क्रूरकर्म करने वाला एवं शिरोरोगी होता है तथा उसे दाँतों में दर्द होता है ।

१७. **गमनेच्छा** भाव में चन्द्रमा हों तो जातक की वुद्धि तीव्र होती है । वह स्वाभिमानी तथा पीलपाँव रोग ग्रस्त होता है ।

१८. चन्द्रमा के **सभा** भाव में होने पर जातक दाता, धार्मिक एवं युवराज होता है ।

१९. जातक वहुभाषी, प्रिय, शान्तस्वभाव वाला, दो पत्नियों वाला, धार्मिक, कुछ मन्दशरीर वाला एवं स्त्रीपुत्रादि से सम्पन्न होता है ।

२०. **आगम** भाव में चन्द्रमा हों तो जातक की पत्नी रोगी होती है । उसे एक ही पुत्र होता है । ऐसा जातक क्रोधी स्वभाव वाला एवं दु:खी व्यक्ति होता है ।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भोजने च महालुब्धो[1] सुतस्थाने विशेषतः ।
जायास्थानेऽपि नियतं तत्फलं परिचिन्तयेत् ।।२१।।

कन्यापत्यं च बहुलं जाया च मृयते ध्रुवम् ।
गुरुणासहितश्चन्द्रो यत्र यत्र स्थितो भवेत् ।।२२।।

यदि निद्राभवेत्तस्य सर्वं भद्रं भविष्यति[2] ।
राहुणा सहितश्चन्द्रो यदि निद्रायितो[3] भवेत् ।।२३।।

तदा सर्वविनाशःस्याद्दोषाश्चैव सहस्रशः ।।२४।।

इति संकेतकौमुद्यां भावप्रकरणे चन्द्रभावोनाम
द्वितीयोऽध्यायः ।।२।।



१. लुब्धः, क । २. भवेत्पुनः, क ।
३. निद्रायुतो, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२१. **भोजन** भाव में चन्द्रमा हो तो व्यक्ति महा लालची होता है। यदि चन्द्रमा **सुत**-स्थान में स्थित है तब यह फल विशेष रूप में होता है। यही फल **जाया** स्थान में स्थित होने पर निश्चित ही प्राप्त होता है उसकी चिन्ता करनी चाहिए।

२२. ऐसे जातक को कन्याएँ अनेक होती हैं तथा पत्नी की हानि होती है।

चन्द्रमा **बृहस्पति** के साथ जहाँ कहीं भी हो—

२३. यदि वह **निद्राभाव** में है तो सर्वविध कल्याण करेगा।

किन्तु **राहु** के साथ चन्द्रमा यदि निद्राभाव में है तो—

२४. सब प्रकार से विनाश का कारण बनता है तथा सहस्रों दोष उत्पन्न करता है।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## तृतीयोऽध्यायः

—:०:—

।। अथमङ्गलभावफलम् ।।

शयने च कुजे जातो[1] लम्पटः कृपणः सुखी[2] ।
महाक्रोधी महादक्षः पण्डितो जायते नरः ।।१।।

पञ्चमे सप्तमे वापि शयनस्थो यदा कुजः ।
नाशयेत्प्रथमापत्यं नारीं च प्रथमां पुनः ।।२।।

शत्रुगेहे यदा भौमो रिपुणाचावलोकितः ।
भुजच्छेदो भवेत्तस्य[3] कर्णादिषु विशेषतः ।।३।।

शनिराहुसमायुक्तः स च भौमो यदा भवेत् ।
तदा तस्य शिरश्छेदो मुनिभिः परिकीर्तितः ।।४।।

शयने च यदा लग्ने नाना रोग समन्वितः ।
देहभङ्गमवाप्नोति दद्रु कुष्ठविचर्चिकैः ।।५।।

उपवेशे यदा भौमो जायते च नराधमः[4] ।
धनवान् क्रूरकर्मा च निष्ठुरो ज्ञानवर्जितः ।।६।।

---

१. जाते, क ।
२. सुधी, क ।
३. भवेच्चैव, क ।
४. न संधमः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ।। तृतीय अध्याय ।।

—:o:—

१ मङ्गल के शयन अवस्था में होने पर जातक लम्पट, कृपण, सुखी, अत्यन्त क्रोधी, अत्यधिक कुशल एवं विद्वान् होता है।

२. शयन भाव का मङ्गल यदि पाँचवें या सातवें स्थान में हो तब प्रथम पुत्र एवं प्रथम पत्नी की हानि होती है।

३. यही मङ्गल यदि शत्रु स्थान में या शत्रु ग्रहों द्वारा दृष्ट हो तब जातक के बाहु एवं कान आदि कटने का योग होता है।

४. यदि उसके साथ शनि एवं राहु भी हों तब शिरश्छेद का योग होता है।

६. शयन भाव का मंगल यदि लग्न में हो तो जातक अनेक प्रकार से रोग ग्रस्त होता है। दद्रु, कुष्ठ, विचर्चिका आदि रोगों के कारण उसका अंग-भंग हो सकता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पापशीलो महारोगी दरिद्रो विकलो महान् ।
यदि लग्ने विशेषेण वक्तव्यं[1] च सुनिश्चितम् ।।७।।

धर्मस्थाने भवेच्चैवं कर्मस्थाने विशेषतः ।
तदा सर्वविनाशः स्यात्तथा पुत्रकलत्रयोः ।।८।।

शुभैर्यदिसमायुक्तो मित्रयुक्तो भवेत्पुनः ।
[2]तदैतद्विपरीतं[3] च ज्ञातव्यं च[4] बलाबलैः ।।९।।

नेत्रपाणौ च यो [5]जातश्चक्षुर्हीनो[6] भवेन्नृचक्षुः ।
पुत्रदार धनैस्त्यक्तो दारिद्र्येण[7] च दह्यते ।।१०।।

।। एतल्लग्ने विचार्यम् ।।

अन्यस्थाने[8] स्थितो भौमो नेत्रपाणौ यदा भवेत् ।
तदा सर्वसुखं तस्य पुत्रदारधनैर्युतः ।।११।।

देहमांद्यं भवेत्किंचित्[9] सन्धौ भवति वेदना ।
व्याघ्रभीतिः सर्पभीतिश्चाग्नेर्भीतिर्जलाद्भयम्[10] ।।१२।।

द्वितीये सप्तमेवापि धनहीनो भवेन्नरः ।
जाया च म्रियते तस्य भूमिजीवी भवेत्सदा ।।१३।।

[सधनश्च वणिक् सुखी]

---

१. वक्तव्यश्च, क ।
२. मदेतद्, क ।
३. विपरीतश्च, क ।
४. यस्य देव वलावलम्, क ।
५. जान्वो, क ।
६. श्चतुर्दीनो, ख ।
७. दारिद्र्यं नैव दृश्यते, क ।
८. अन्व, क ।
९. क्लिष्टं, क ।
१०. महद्भयम्, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

७ लग्न में उक्त मंगल के रहने पर विशेष रूप से यह फल कहना चाहिए कि जातक निश्चित रूप से पापी, महारोगी, दरिद्र एवं महान् व्याकुल व्यक्तित्व वाला होगा ।

८. वही मङ्गल यदि धर्म या विशेष रूप से कर्म स्थान में हो तो उस जातक का पुत्र स्त्री आदि सब कुछ नष्ट हो जाते हैं ।

९. यदि वह शुभ ग्रहों के साथ या मित्र ग्रह के साथ हो तब वह उक्त फल से विपरीत फल प्रदान करता है अर्थात् शुभ कारक होता है ।

१०. नेत्रपाणि भाव का मङ्गल हो तो वह जातक अन्धा होता है । उसके धन, पुत्र, स्त्री आदि उसे त्याग देते हैं । वह दरिद्रता से संतप्त रहता है ।

यह फल लग्नस्थ मंगल का है ।

११. नेत्रपाणि भाव का मङ्गल यदि लग्न के अतिरिक्त अन्य स्थान में हो तो जातक धन, पुत्र, स्त्री आदि सब प्रकार के सुखों से सम्पन्न होता है ।

१२. उसके शरीर में थोड़ी सुस्ती होती है तथा जोड़ों में दर्द होता है । उसे बाघ, सर्प, अग्नि एवं जल से भय होता है ।

१३. यही मङ्गल यदि दूसरे एवं सातवें स्थान पर होता है तब जातक धनहीन होता है उसकी पत्नी का मरण होता है, तथा उसकी जीविका भूमि से चलती है ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रकाशने कुजे जातो[1] धनवान् वणिजः[2] सुखी ।
क्षताद्विर्वामनेत्रे चोच्चाच्च[3] पतनं ध्रुवम् ॥१४॥

सुतस्थाने कलत्रे वा यदि दैवाद् भवेत्पुनः ।
तदा सर्वान् सुतान् हन्ति नारीं[4] चैव विशेषतः ॥१५॥

यत्र तत्र स्थितो भौमः पापयुक्तो भवेद्यदि ।
पतितं तं बिजानीयाच्छनियुक्तः[5] स गोवधी ॥१६॥

गमने च यदा जातः प्रवासी नित्यदुःखितः ।
शरीरे च भवेद्रोगो दद्रुकुष्ठविचर्चिकाः ॥१७॥

पित्तशूली महातेजा सन्धौ भवति वेदना ।
क्षिप्रकर्मा[6] महाधैर्यः स्त्रीवशी[7] बहुभाषकः ॥१८॥

चक्षुर्ज्वाला शिरोरोगी दन्तशूली भवेन्नरः ।
त्वग्दोषश्च भवेत् किंचित् दंष्ट्रिणो भयमद्भुतम् ॥१६॥

एतल्लग्ने[8] भवेच्चैवमन्यभावेषु नैव च ।
नानाधनो महादक्षो[9] राजपात्रो भवेन्नरः ॥२०॥

---

१. कुजो, क ।
२. क्षणकः, क ।
३. चोच्चोच्च, ख ।
४. नारी चैव न शंसयः, क ।
५. श्च, क ।
६. विप्र, क ।
७. स्त्रीवेशो, ख ।
८. एवं, क ।
९. दक्षः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

१४. मङ्गल प्रकाश भाव में हो तो जातक धनवान्, व्यापारी एवं सुखी होता है। उसके बायें नेत्र में चोट लगती है तथा ऊँचाई से निश्चित रूप से गिरता है।

१५. भाग्य से यदि वह सुत स्थान में या जाया स्थान में हो तब सभी पुत्रों एवं विशेषतः स्त्री का नाश करता है।

१६. पापग्रहों के साथ मङ्गल जहाँ कहीं भी स्थित हो वह जातक पतित होगा। यदि शनि की युति है तब गोहत्यारा होगा।

१७. गमन भाव में मङ्गल हो तो जातक प्रवासी एवं सदा दुःखी होता है। उसके शरीर में दाद, खाज एवं कुष्ठ रोग होते हैं।

१८. जातक को पित्तजशूल होता है एवं वह महातेजस्वी होता है, उसके जोड़ों में दर्द होता है। वह शीघ्र कार्य करने वाला, महाधैर्यशाली स्त्री के वशीभूत एवं अधिक बोलने वाला होता है।

१९. उसकी आँखों में जलन होती है, सिर का रोग एवं दाँत में दर्द होता है। थोड़ा सा चर्म रोग एवं डाढ़ वाले पशु व्याघ्र आदि से भय होता है।

२०. यह फल लग्नस्थ मंगल का है अन्य स्थानों का नहीं। जातक अनेक प्रकार के धन से सम्पन्न, अत्यन्त कुशल. राज्याधिकारी होता है।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

किन्त्वस्य[1] देह मान्द्यं[2] च शरीरे नित्यमेव च[3] ।
दाता[4] भोगी भवेच्चैव जायते च नरेश्वरः ।।२१।।

प्रवासी गमनेच्छायां गुदरोगीभवेच्चसः[5] ।
धनहीनः क्रूर कर्मा च जायते क्षितिजस्य[6] तु ।।२२।।

।। एतल्लग्नपरता ।।

सभायां च यदा भौमो[7] धार्मिको बहुसम्पदः ।
गुणवांश्च महादाता शिरोरोगी भवेच्च सः ।।२३।।

नवमे पञ्चमे चैव सभायां च यदा कुजः ।
विद्याहीनः कर्महीनो धर्मविघ्नः पदे पदे ।।२४।।

सुतस्थाने यदा भौमो द्वादशे च भवेत्पुनः ।
तदासर्वसुतान्हन्ति कथितं मुनिपुङ्गवैः ।।२५।।

कुजस्यागमने नित्यं खञ्जो भवति नान्यथा ।
कर्ण रोगी पित्तशूली जायते च नराधमः[8] ।।२६।।

धनवान्धार्मिकश्चैव यदि स्याद् गमने पुनः ।
नानाधनी महामानी द्विभार्यो बहुपुत्रकः ।।२७।।

---

१. कित्यस्य, क।
४. मान्द्यस्य, क।
३. दा, क।
४. इयं पंक्तिर्नास्ति, क।

१. रोगो, ख।
२. क्षितिपस्य, क।
३. यातो, ख।
४. नधारयः, क।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२१. किन्तु उसके शरीर में सुस्ती सदा रहती है। यद्यपि वह उदार, विलासी, तथा शासक होता है।

२२. मङ्गल के **गमनेच्छा** भाव में होने पर जातक प्रवासी, गुदरोगी, धन, हीन क्रूर कर्म करने वाला होता है।

यह लग्नपरता का फल है।

२३. जब मङ्गल **सभा** में हो तो व्यक्ति धार्मिक, अनेक सम्पत्तियों वाला, गुणवान्, उदार एवं शिरोरोगी होता है।

२४. **सभा** भाव का मङ्गल जब लग्न से नवें एवं **पाचवें** स्थान में हो तो जातक विद्याहीन एवं कर्महीन होता है उसके धर्म के मार्ग में पग-पग पर विघ्न होता है।

२५. वही मंगल **सुत** स्थान या **बारहवें स्थान** में हो तब मुनिश्रेष्ठों ने कहा है कि सभी पुत्रों का नाश करता है।

२६. मंगल के **आगमन** भाव में होने पर जातक अवश्य ही अङ्गहीन होता है। वह नराधम कान का रोगी एवं वित्तशूली होता है।

२७. किन्तु यदि मङ्गल **गमन** भाव होता है तब वह धनवान्, धार्मिक अनेक सम्पत्तियों वाला, महास्वाभिमानी, दो पत्नियों वाला एवं अनेक पुत्रों वाला होता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भोजने भूमिजस्यापि यो जातो मांसलुब्धकः ।
स्वल्पाहारो महाक्रोधी नित्योत्साही धनान्वितः ॥२८॥

अष्टमस्थो यदा भौमो भोजने शयनेऽपि वा ।
तदातस्यापमृत्युः स्यात् पशुभिर्हन्यते ततः[1] ॥२६॥

कुजस्य नृत्यलिप्सायां यो जातो धनवान्भवेत् ।
दाता भोक्ता सदा सौख्यं धनेशश्च भवेन्नरः ॥३०॥

लग्ने द्वितीयगो[2] वापि कर्मस्थानस्थितोऽपि वा ।
सप्तमेऽपि[3] यदा भौमः सर्वसौख्य प्रदायकः ॥३१॥

अष्टमो[4] नवमस्थो वा नानादुःखप्रदायकः ।
अपत्मृत्युर्भवेत्तस्य[5] धर्महानिः पदे पदे ॥३२॥

कौतुके चितिजस्यापि जातो भवति पण्डितः ।
नाना धनैः सुसंयुक्तो द्विभार्यो बहुकन्यकः ॥३३॥

विहाय पञ्चमं स्थानं सप्तमं नवमं तथा[6] ।
तत्रैत द्विपरीतं तु वक्तव्यं च सुनिश्चितम् ॥३४॥

विशेषतश्च[7] वैकल्यं नानारोगसमन्वितः ।
प्रथमापत्यनाशः स्यात् कलत्रस्य तथैव च ॥३५॥

---

१. सः, क ।
२. गे, क
३. सप्तमे च, क ।
४. अष्टमे, ख ।
५. च्चैव, क ।
६. हि वा, क ।
७. विशेषितं च, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२८. मङ्गल के भोजन भाव में होने पर जातक मांस प्रेमी, कम खाने वाला, महा क्रोधी, सदा उत्साही तथा धनी होता है।

२९. भोजन या शयन भाव का मंगल जब आठवें स्थान में हो तो जातक की अपमृत्यु होती है तथा वह पशुओं द्वारा मारा जाता है!

३०. नृत्यलिप्सा में मङ्गल के होने पर जातक धनवान्, उदार, भोगी, सदा सुखी तथा कुबेर के समान धनी होता है।

३१. उक्त भाव का मङ्गल जब लग्न में, द्वितीय स्थान में, कर्म स्थान में या सातवें स्थान में हो तो सभी प्रकार का सुख प्रदान करता है।

३२. किन्तु आठवें या नवें स्थान पर होने के अनेक प्रकार का दुःख देता है। उस जातक की अकाल मृत्यु होती है तथा पग-पग पर धर्म की हानि होती है।

३३. मङ्गल जब कौतुक में हो तो जातक पण्डित, अनेक प्रकार के धन से युक्त, दो पत्नियों वाला तथा अनेक कन्याओं का पिता होता है।

३४. सातवें पाँचवें एवं नवें स्थान को छोड़ कर अन्य स्थान पर होने से निश्चित रूप से इसके विपरीत फल होता है।

३५. विशेप रूप से जातक को व्याकुलता होती है, अनेक प्रकार के रोग होते हैं, प्रथम पुत्र एवं स्त्री की हानि होती है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

निद्रायां[1] च कुजे[2] जातो मूर्खो भवति पण्डितः ।
धनहीनो महाक्रोधी जायते स नराधमः ।।३६।।

लग्ने द्वितीयगोवापि[3] तृतीये नवमेऽपिवाः ।
दशमैकादशे[4] चैव एतद्वाच्यं तथा बुधैः[5] ।।३७।।

पञ्चमे सप्तमे वापि यस्य निःशयितः[6] कुजः ।
तस्यापत्यस्य बाहुल्यं नाना सुखसमन्वितम्[7] ।।३८।।

राहुणा सहितो भौमो यदि निद्रायितः[8] भवेत्[9] ।
नाशयेत्प्रथमापत्यं[10] नानादुःख प्रदायकः ।।३९।।

धनवान्कलत्रबहुलो[11] दाता सर्वगुणान्वितः ।
किञ्चद्रोगो भवेत्तस्य पादमूलेरुजान्वितः ।।४०।।

।। इति भौमभावफलम् ।।

।। अथबुधभावफलम् ।।

शयने च [12]बुधेजातो बलवान् क्षुधितस्तथा[13] ।
अङ्गच्छेदो[14] भवेद्वापि खञ्जो भवति नान्यथा ।।४१।।

---

१ निद्रायाश्च क
२. कुजो, क ।
३. गे, ख ।
४. दशम्यै, क ।
५. बुधः, क ।
६. निद्रायुतः, ख ।
७. समन्वितः, ख ।
८. निद्रायुतो, ख ।
९. कुजः, क ।
१०. नामायेन्य, क ।
११. धनं कलत्रं, क ।
१२. बुधो, क ।
१३. सदा, क ।
१४. अङ्गच्छेदी, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

३६. जव मङ्गल निद्रा में हो तो जातक पण्डित होते हुए भी मूर्ख, महा-क्रोधी तथा धनहीन होता है ।

३७. यह फल उसके लग्न, द्वितीय, तृतीय, नवम, दशम तथा एकादश स्थान पर होने पर ही विद्वानों को कहना चाहिए ।

३८. जिसके पाँचवें एवं सातवें स्थान में मंगल निद्रा में होता है उसके अनेक पुत्र होते हैं तथा वह अनेक प्रकार के सुखों से सम्पन्न होता है ।

३९. यदि निद्रा भाव के मंगल के साथ राहु की युति होती है तो वह प्रथम पुत्र की हानि करता है तथा अनेक प्रकार के दुःख देता है ।

४०. जातक धनवान् अनेक पत्नियों वाला, उदार, सर्वगुणसम्पन्न तथा कुछ रोगी होता है । उसके पैर के निचले भाग में रोग होता है ।

।। भौमभाव का फल समाप्त ।।

४१. बुध के शयन भाव में होने पर जातक वलवान् तथा भूखा होता है । उसका अवश्य ही अङ्ग-भङ्ग होता है अथवा लंगड़ा होता है ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यदि लग्ने भवेद्वापि एतद्वाच्यं सदाबुधैः ।
अन्यस्थाने स्थितश्चैव[1] दरिद्रो बहुलम्पटः ।।४२।।

उपवेशे च यो जातः स वाङ्मी जायते ध्रुवम् ।
कवितागुणसंयुक्तो[2] गौरवर्णो महाशुचिः ।।४३।।

[3]यदि पापग्रहायुक्तः शत्रुणा यदिवीक्षितः ।
[4]महापातकयोगोऽयं विष्णुना परिकीर्तितः ।।४४।।

[5]स्वगृहे मित्रयुक्तो वा नाना सुखप्रदायकः ।
पुण्यवान्धार्मिकश्चैव चक्षुरोगश्च[6] केवलम् ।।४५।।

नेत्र पाणौ तथा जातः श्लीपदी च तथाधमः[7] ।
विद्याहीनो विशेषेण पुत्र नाशो भवेद् ध्रुवम् ।।४६।।

पञ्चमस्थो[8] यदा[9] सौम्यो नेत्रपाणौ भवेद्यादि ।
नाशयेत् प्रथमं पुत्रं कन्या च बहुला भवेत् ।।४७।।

प्रकाशने भवेद्दाता धार्मिकोऽपि धनान्वितः ।
नानागुण समायुक्तो जायते वेदपारगः ।।४८।।

---

१. श्चैवं, क ।
२. गण, क ।
३-४. यदि पापसमायुक्तोनाना सौख्य प्रदायकः, क ।
५. पंक्ती न स्तः, क ।
६. रोगोऽपि, क ।
७. नरः, क ।
८. स्थे, क ।
९. यथा, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

४२. यदि वह **लग्न** में है तव यह फल विद्वानों सदा को वताना चाहिए। यदि अन्यत्र स्थित है तव जातक दरिद्र एवं बहुत लम्पट होता है ।

४३. बुध यदि **उपवेश** में है तव जातक निश्चित रूप से वाङ्मी, कवि, गौरवर्ण तथा अत्यन्त पवित्र होता है ।

४४. विष्णु ने कहा है कि उक्त बुध के साथ यदि पापग्रह हों या उस पर शत्रु ग्रहों की दृष्टि हो तो वह महापातक योग होता है ।

४५. किन्तु यदि वह स्वगृही हो या मित्र ग्रहों के साथ हो तो अनेक प्रकार का सुख देता है । वह जातक पुण्यवान् एवं धार्मिक होता है । उसे केवल आँखों का रोग होता है ।

४६. बुध जव **नेत्रपाणि** भाव में होता है तव जातक अधम तथा पीलपाँव रोग युक्त होता है। विशेष रूप से वह विद्या विहीन होता है तथा निश्चित रूप से उसके पुत्र का नाश होता है ।

४७. जव बुध **लग्न** से **पाँचवें** स्थान में स्थित हो तथा **नेत्रपाणि** भाव में हो तो प्रथम पुत्र का नाश करता है तथा कन्याएँ अधिक होती हैं ।

४८. **प्रकाश** भाव में बुध हो तो जातक उदार, धार्मिक, धनी, अनेक गुण-सम्पन्न तथा वेद का विद्वान् होता है ।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

गमने च बुधे[1] जातो जलदोषी भवेन्नरः ।
वाणिज्यधनवांश्चैव[2] [3]सर्पाद् भीतिर्जलाद् भयम् ।।४६।।

नाना दुःखं भवेत्तस्य स्त्रीनाशो बन्धुनाशकः ।
मूर्खोऽथ विकलश्चैव[4] तथा [5]गुणविवर्जितः ।।५०।।

गमनेच्छासु[6] यो जातो लम्पटो दक्ष एव च ।
स्त्रीवशो दुष्टभार्यश्च कामुको बहुभाषकः ।।५१।।

नानादुःखं भवेत्तस्य सर्वरोग[7] समन्वितः ।
दन्तघातो[8] भवेच्चैव[9] कलहो नित्यमेव च ।।५२।।

सभायामपि यो जातो मूर्खो भवति निश्चितम् ।
धनवान् धार्मिकश्चैव चिररोगो भवेच्च सः ।।५३।।

पञ्चमे द्वादशे वापि सभायां च सुधांशुजः ।
स्त्र्यपत्यं बहुलं दत्ते कार्पण्यं[10] च विशेषतः ।।५४।।

[11]सप्तमे च यदा सौम्यः सभायां च यदा स्थितः ।
तदा सर्वसुखं तस्य कृष्णवर्णो दुरासदः ।।५५।।

---

१. बुधो, क ।
२. धनलाभश्च, क ।
३. जलो, क ।
४. विकलश्च, ख ।
५. गुणैः सर्वैर्विवर्जितः, क ।
६. गमनेच्छायां च, क ।
७. सर्वरोगीभवेच्च सः, क ।
८. घाती, क ।
९. भवेन्मर्त्यो कलहो नित्यमेव च, क ।
१०. कार्या वस्त्र, क ।
११. सप्तमे द्वादशे वापि सभायां च सुधांशुजः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

४९. बुध जब **गमन** भाव में होता है तब जातक व्यापार से धनी होता है तथा उसे सर्प एवं जल से भय होता है ।

५०. जातक को अनेक प्रकार का दुःख होता है । उसकी स्त्री का नाश होता है । वह जातक मूर्ख, व्याकुल तथा गुणहीन होता है ।

५१. बुध के **गमनेच्छा** में उत्पन्न जातक लम्पट, कुशल, स्त्री के वशीभूत, दुष्ट पत्नी वाला, कामी तथा अधिक बोलने वाला होता है ।

५२. उसको अनेक प्रकार के दुःख होते हैं । सभी प्रकार के रोग होते हैं । दाँत पर चोट लगती है तथा सदा कलह होता है ।

५३. जब बुध **सभा** में होता है तब जातक निश्चित रूप से मूर्ख होता है तथा वह धनवान्, धार्मिक तथा चिर रोगी होता है ।

५४. चन्द्रपुत्र बुध जब **सभा** भाव में **पाँचवें** या **द्वादश** स्थान में स्थित होता है तब अनेक स्त्री पुत्र आदि प्रदान करता है तथा विशेष रूप से कृपण बनाता है ।

५५. जब बुध **सप्तमस्थ** होकर **सभा** भाव में होता है तब जातक सर्व सुख सम्पन्न, कृष्णवर्ण तथा जिद्दी होता है ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

[1]क्रूरः खलोऽतिमूर्खश्च पापशीलो भवेन्नरः ।
बुधस्य गमने नित्यं जायते च नराधमः ।।५६।।

पुत्रद्वयं धनं किञ्चिन्नानामतिश्च जायते ।
गुह्यस्थाने भवेद्रोगो मूत्रकृच्छ्रं सुदारुणम् ।।५७।।

भोजने च बुधे जाते[2] धनहीनो भवेन्नरः ।
परद्वेषी प्रवासी च शीर्षे सर्वरुजान्वितः ।।५८।।

क्षतादिर्वामदेहे च व्रणदद्रु विचर्चिकाः ।
कंकालवेदनाञ्चैव शिरोरोगी[3] विशेषतः ।।५९।।

यो जातो नृत्यलिप्सायां धनवान् पण्डितः[4] कविः ।
उत्साही च महाहृष्टो भुनक्ति सुखमद्भुतम् ।।६०।।

पञ्चपुत्री भवेत्सोऽपि चतस्रस्तस्य[5] कन्यकाः ।
[6]भार्याद्वयं तथा ज्ञेयं खलु सर्वगुणान्वितम् ।।६१।।

कौतुके च यदा जातो भवेत् सर्वजनप्रियः ।
अर्शरोगी दद्रुयुक्तस्त्वग्दोषी[7] च न संशयः ।।६२।।

---

१. इत आरभ्य तिस्त्रः पंक्तयः, क मातृकायां न सन्ति ।
२. जातो, क ।
३. रोगे, ख ।
४. पाणितः, क ।
५. चतस्त्री, ख ।
६. इतआरभ्य द्वे पंक्ती न स्तः क
७. स्लग्दोषी, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

५६· बुध के **गमन** भाव में होने पर नराधम जातक क्रूर, दुष्ट, अति मूर्ख, तथा पापी होता है।

५७. उसे दो पुत्र, थोड़ा धन, अस्थिर बुद्धि होती है। उसके गुप्ताङ्ग में दारुण मूत्रकृच्छ्र रोग होता है।

५८. **भोजन** भाव में बुध के होने पर जातक धनहीन, परद्वेषी, प्रवासी, सब प्रकार से शिरोरोगी होता है।

५९ बायें अङ्ग में चोट, घाव, दाद, खाज होती है। उसके हड्डियों में पीड़ा होता है। विशेष रूप से सिर में रोग होता है।

६०. जब बुध **नृत्यलिप्सा** में होता है तब जातक धनवान्, पण्डित, कवि, उत्साही, बहुत प्रसन्न तथा अद्‌भुत सुख का उपभोग करता है।

६१. उसको ५ पुत्र एवं ४ कन्याएँ होतीं है। सभी गुणों से युक्त दो पत्नियाँ उसे प्राप्त होतीं है।

६२. जब बुध **कौतुक** में होता है तब जातक सर्वजन प्रिय होता है। उसे चर्म रोग दाद एवं बवासीर होता है इसमें संदेह नहीं है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पञ्चमे दशमे वापि[1] कौतुके च सुधांशुजः ।
[2]प्रथमापत्यहानिः स्यात् स्त्र्यपत्यं बहुलं भवेत् ।६३।।

कर्मस्थाने भवेद्वापि धर्मस्थाने तथैव[3] च ।
नाना सुखं[4] भवेत्तस्य सर्वकर्मसमन्वितः ।।६४।।

निद्रायां ज्ञे[5] यदा जातः सर्वदुःखैकभाजनः[6] ।
अल्पायुश्च भवेत् सोऽपि विवादी च न संशयः ।।६५।।

तनुस्थाने[7] भवेद्वापि कर्मस्थाने तथैव च ।
पूर्वोक्तं च फलं यच्च[8] तदेव स्यात् सुदारुणम् ।।६६।।

अन्यस्थाने भवेद्वापि विपरीतं फलं वदेत् ।
धनधान्ययुतं चैव वक्तव्यं च सुनिश्चितम् ।।६७।।

२. सर्वसारमतं ज्ञेयं संकेते कौमुदीवरे ।

इति कुजबुधभावोनाम तृतीयोऽध्यायः[9] ।



---

१ इतः परं पाठो नास्ति, क मातृकायाम् ।
२. इतः प्राक्—
भार्या द्वयं तथा ज्ञेयं सर्वगुण समन्वितम् ।
कुतुके तु यदा जातः सर्वगुण समन्वितः ।।
इत्यधिकः पाठः, क ।
३. विशेषतः, क ।
४. शुषं, क ।
५. च, क ।
६. भाजनम्, क ।
७. चतुः, क ।
८. इत्यधिकः पाठः, क ।
९. इति बुधभावो नामाध्यायः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

६३. कौतुक भाव का बुध जब पाँचवें या दसवें स्थान में स्थित हो तो प्रथम पुत्र की हानि होती है तथा स्त्री एवं पुत्र अधिक संख्या में प्राप्त होते हैं।

६४. वही बुध यदि **कर्म** या **धर्म** स्थान में स्थित हो तो जातक अनेक प्रकार से सुखी होता है तथा सभी प्रकार के कर्म करता है।

६५. बुध जब **निद्रा** में होता है तब जातक अनेक दुःख भोगता है अल्पायु होता है तथा निस्संदेह झगड़ालू होता है।

६६. वही बुध यदि **लग्न** स्थान में या **कर्म** स्थान में स्थित हो तब वही पूर्वोक्त दारुण फल होता है।

६७. अन्य स्थान में होने पर विपरीत फल कहना चाहिए। जातक धन-धान्य युक्त होगा यह बताना चाहिए।

संकेत कौमुदी में यह सभी मतों का सार समझना चाहिए।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## चतुर्थोऽध्यायः

—:o:—

।। अथबृहस्पतिभावफलम् ।।

बलवान् दुखितो गौरः शूलरोगी रुजान्वितः ।
जीवे[1] च शयने जातो मानवो नात्र संशयः ।।१।।

यदि लग्ने भवेच्चैव सप्तमे दशमेऽपि वा ।
नवमे पञ्चमे चैव धनवान् पण्डितः शुचिः ।।२।।

उपवेशे गुरौ[2] दुःखी बहुभाषी च रोगवान् ।
दन्तघाती महाशिल्पी श्लीपदी रोगसंयुतः ।।३।।

द्वितीये द्वादशे वापि तृतीयैकादशे तथा ।
[3]सर्वगुणसमायुक्तो नानाविद्यासु तत्परः ।।४।।

नेत्रपाणौ तथा गौरः शीर्षरोगी [4]भवेत्तथा ।
कार्यहानिर्भवेत्तस्य संशयस्तु पदे पदे ।।५।।

---

१. जीवश्च, क ।
२. गुरुर्दुःखी, क ।
३. सर्वः, ख ।
४. धनी भवेत्, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ।। चतुर्थ अध्याय ।।

—:०:—

१. जब बृहस्पति **शयन** में हों तो मनुष्य निश्चित रूप से बलवान् दुःखी, गौर, शूल रोग ग्रस्त, रोगी होता है।

२. यदि वह **लग्न, सातवें, दसवें, नवें** या **पाँचवें** स्थान में होता है तो जातक धनवान्, विद्वान् तथा पवित्र होता है।

३. यदि गुरु **उपवेश** में है तब जातक दुःखी, अधिक बोलने वाला, रोगी होता है। उसे दाँत में चोट लगती है। वह महान् शिल्पकार तथा श्लोपदरोगग्रस्त होता है।

४. किन्तु यदि बृहस्पति **द्वितीय, द्वादश,, तृतीय या एकादश** स्थान में हो तब जातक सर्वगुण सम्पन्न एवं अनेक विद्याओं का ज्ञाता होता है।

५. जब बृहस्पति **नेत्रपाणि** भाव में हों तब जातक गोरा तथा शिरोरोगी होता है। उसके कार्य में बाधाएँ होती है तथा वह शङ्कालु होता है।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

द्यूतादिश्च रणे नित्यं लग्ने चैव न संशयः ।
नवषष्ठाष्टमेवापि नेत्रपाणौ [1]गुरौ भवेत् ।।६।।

शत्रुक्षयो भवेत्तस्य गंगायां मरणं ध्रुवम् ।
गुरुप्रकाशे धनवान्नानारत्नसमन्वितः[2] ।।७।।

राजमानो[3] भवेन्नित्यं लग्ने वा दशमे पुनः ।
यस्यान्यत्र भवेज्जीवो लिंगे[4] गुह्ये रुजान्वितः ।।८।।

मूर्खस्तु लम्पटः पापी श्यामवर्णो रुजान्वितः ।
[5]सेवाकर्मरतः शूली प्रवासी धनवानपि ।।९।।

[6]गुरौ च गमनेच्छायां जातो भवति मानवः ।
द्वितीये पञ्चमे चैव[7] सप्तमे दशमे तथा ।।१०।।

अन्यस्थाने भवेद्वापि वैपरीत्येन चिन्तनम् ।
[8]सर्पाद्भीतिश्चोग्रकर्मा साहसी गमने गुरौ ।।११।।

परवित्तेन धनवान् राजसेवान्वितो नरः ।
पण्डितः सुन्दरो वाङ्मी सभायां [9]वाक्यतः स्थिते ।।१२।।

---

१. गुरुर्भवेत्, ख ।
२. समायुतः, क ।
३. पात्रो, क ।
४. लिजे, क ।
५. सेवाकर्मैकरतः, ख ।
६. गुरोश्च, क ।
७. वापि, क ।
८. सर्पभीति, क ।
९. गीष्पतौ, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

६. यदि वह **लग्न** में हो तो जातक को युद्ध में सदा चोट लगती है ।

**नवम, षष्ठ** एवं **अष्टम** भाव में स्थित गुरु जब **नेत्रपाणि** भाव में होता है—

७. तब जातक के शत्रु का नाश होता है उसकी मृत्यु गंगा तट पर होती है ।

जब वृहस्पति **प्रकाश** में हो तो जातक धनवान् एवं अनेक रत्नों का स्वामी होता है ।

८. यदि गुरु **लग्न** में या **दशम** स्थान में हो तो राजा उसका सदा सम्मान करते हैं ।

जिसका वृहस्पति अन्यत्र स्थित हो उसे लिंग में एवं गुह्य स्थान में रोग होता है ।

९. वह जातक मूर्ख, लम्पट, पापी, श्यामवर्ण, रोगी, नौकरी करने वाला, शूलरोगी, प्रवासी तथा धनवान् होता है ।

१०. **द्वितीय, पाँचवें, सातवें, दशवें** स्थान में स्थित गुरु **गमनेच्छा** में हो तो उक्त फल होता है ।

११. अन्य स्थान में स्थित होने पर फल विपरीत होता है ।

गुरु जब **गमन** में होता हो तो जातक को सर्प से भय होता है तथा वह उग्र कर्म करने वाला होता है ।

१२. गुरु जब **सभा** भाव में स्थित होता है तब जातक दूसरे के धन से धनी राजसेवक (सरकारी नौकरी करने वाला), विद्वान्, सुन्दर तथा वाङ्मी होता है ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

केन्द्रे जीवे[1] यदाजीवः सभायां च भवेत् पुनः ।
तदासर्व सुखं ज्ञेयं पुत्रदार[2]धनैर्यतम्[3] ।।१३।।

यदि दैवाद् भवेद्वापि द्वादशे चाष्टमे तथा ।
तदा सर्वविनाशः स्यात् सो नरः दुःखभाजनम् ।।१४।

धार्मिकस्तीर्थवान् मानी भवेदागमने गुरौ ।
नानातीर्थकरो नित्यमुत्साही नित्यगर्वितः ।।१५।।

भोजने विविधं सौख्यं मांसलुब्धो महामतिः[4] ।
कामुकः प्रियवादी च यदि लग्ने भवेत्पुनः ।।१६।।

पञ्चमे नवमे चैव पुत्रधर्मसमन्वितः ।
ग्रहान्तरे [5]भवेद्वापि सर्वरोग समाकुलः[6] ।।१७।।

नृत्येच्छायां भवेद्वाङ्मी धनवान् सात्त्विकस्तथा ।
महदैश्वर्यसंयुक्तो[7] जीवस्य[8] तु भवेन्नरः ।।१८।।

लग्ने वा नवमे वापि दशमे पञ्चमे तथा ।
[9]एतत् सर्वं भवत्येव विपरीमतोऽन्यथा ।।१९।।

---

१. केन्द्रेचैव यदा जीवः, क।
२. दार, क।
३. र्युतः, ख।
४. कविः, क।
५. वापि सर्वः राजरोग समाकुलः, क।
६. इतः परं 'पञ्चमे नवमे चैव पुत्र' इत्यधिकः पाठः ख
७. महैश्वर्येण, ख
८. जीवः स्यान्तु, क।
९. एतत् सर्वं भवत्येव नान्यगेहे कदाचन, क।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

१३. बृहस्पति जब केन्द्रस्थ होकर सभा भाव में हो तो जातक सर्वसुख सम्पन्न एवं पुत्र पत्नी आदि से युक्त होता है।

१४. यदि भाग्य से वही गुरु द्वादश या अष्टम स्थान में स्थित हो तब सर्वनाश होता है तथा वह व्यक्ति दुःखी होता है।

१५. गुरु के आगमन में होने पर जातक धार्मिक, स्वाभिमानी, अनेक तीर्थों की यात्रा करने वाला, उत्साह संपन्न, तथा सदा गर्वयुक्त रहता है।

१६. भोजन मे स्थित होने पर विविध प्रकार का सुख पाता।

वह मांसलोभी, बुद्धिमान्, कामी, प्रियभाषी होता है। यह फल गुरु के लग्न में होने पर मिलता है।

१७. यदि पञ्चम या नवम स्थान में हो तब पुत्र एवं धर्म की प्राप्ति होती है। ग्रहान्तर में होने पर अनेक प्रकार के रोग होते हैं।

१८. नृत्येच्छा में जातक वाङ्मी, धनवान् सात्त्विक, ऐश्वर्य सम्पन्न होता है।

१९ यह फल लग्न, नवम, दशम या पञ्चम स्थान में गुरु के रहने पर होता है। इसके अतिरिक्त स्थानों में स्थित होने पर विपरीत फल मिलता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कौतुके तु गुरौ जातो धनवान्धार्मिकस्सदा ।
नित्योत्साही महाहृष्टो भुनक्ति सुखमुत्तमम् ।।२०।।

कर्मस्थाने भवेद्यस्य लग्ने वा सप्तमे पुनः ।
तदासर्वं भवत्येव विपरीतमतोन्यथा[1] ।।२१।।

निद्राभावे(तु)यो जातः क्रूरो रोगी भवेच्च सः ।
कृपणो बहुभाषी च दुःखितो भ्रमते महीम् ।।२२।।

पञ्चमे सप्तमे वापि कर्मस्थाने [2]यदापि वा ।
स्त्रीनाशः पुत्रनाशश्च द्वादशे धनवान् भवेत् ।।२३।।

।। इति गुरुभावफलम् ।।[3]

।। अथ शुक्रभावफलम् ।।

शुक्रस्य शयने जातो धनवान् लम्पटस्सदा[4] ।
दन्तरोगी महाक्रोधी दैत्यो भवति लग्नगे[5] ।।२४।।

सप्तमैकादशे वापि शयने च [6]भृगुर्भवेत् ।
तदा सर्वसुखं ज्ञेयं दारिद्र्यं न कदाचन ।।२५।।

अन्यं च बहुलं चैव सप्तपुत्राः सुनिश्चितम् ।
पञ्चकन्यास्तथा ज्ञेया ग्रहस्यास्य [7]बलाबलैः ।।२६।।

---

१. इत्यधिकः पाठः, क ।
२. कर्मस्थानो तथापि वा, क ।
३. इति गुरु फलम्, ख ।
४. लम्पटः सदा, ख ।
५. लग्नगः, ख ।
६. भृगी भवेत्, ख ।
७. बलाबले, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२०. गुरु जब कौतुक में हो तब जातक धनवान्, सदा धार्मिक, नित्योत्साही, महाहृष्ट (प्रसन्न) तथा उत्तम सुख का भोग करने वाला होता है।

२१. वही गुरु जिसके कर्म स्थान, लग्न या सप्तम स्थान में होता है। उसके लिए सब कुछ विपरीत होता है।

२२. निद्राभाव में जो उत्पन्न हुआ वह क्रूर, रोगी, कृपण, बड़बोला, दुःखी एवं देशान्तर में भटकने वाला होता है।

२३. जब गुरु पञ्चम, सप्तम या कर्म स्थान में हो तो स्त्री पुत्र का नाश होता है किन्तु द्वादश स्थान में होने पर जातक धनवान् होता है।

२४. लग्नस्थ शुक्र के शयन में उत्पन्न जातक सदा धनवान्, लम्पट, दन्त-रोगी, अत्यन्तक्रोधी तथा दैत्य होता है।

२५. शयन भाव का शुक्र सप्तम या एकादश स्थान में हो तो सभी प्रकार का सुख होता है दरिद्रता कभी नहीं होती।

२६. और भी बहुत कुछ होता है। निश्चित रूप से सात पुत्र होते हैं, पाँच कन्याएँ होती हैं जो इस ग्रह के बलाबल पर निर्भर है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अन्यगेहेषु [1]धनवान्विद्यावान् धार्मिकः पुनः ।
नानासुखं भवेत्तस्य पुत्रनाशो भवेद् ध्रुवम् ॥२७॥

उपवेशे भृगौ जातो बलवान्धार्मिकस्तदा ।
दक्षिणाङ्गे क्षतादिश्च संधौ भवति वेदना ॥२८॥

तुङ्गस्थाने स्थितो[2] वापि स्वगृहे[3] मित्रसंयुतः ।
तदा सर्वसुखं प्रोक्तं पुत्रदारधनप्रदः ॥२९॥

नेत्रपाणौ भृगौ जातश्चक्षुनाशो भवेद् ध्रुवम् ।
लग्ने वा सप्तमे वापि तदा भवति निश्चितम् ॥३०॥

कर्मस्थाने यदा शुक्रो नेत्रपाणौ भवेद्यदि ।
तदा दारिद्र्य दोषेण समुद्रानपि शोषयेत्[4] ॥३१॥

[5]कर्मस्थाने यदा शुक्रः द्विभार्यो बहुसम्पदः ।
नानातीर्थकरो[6] मानी साहसी राजसेवकः ॥३२॥

प्रकाशने भृगौ जातो धनवान्धार्मिकः शुचिः ।
लग्नेऽपि वा द्वितीये वा नवमे वाथ[7] सप्तमे ॥३३॥

मित्रगेहे स्थितो[8] वापि तुङ्गस्थान[9] गतोऽपि वा ।
तदा राज्यास्पदं भुङ्क्ते कर्मस्थाने विशेषतः ॥३४॥

---

१. बलवान्, क ।
२. स्थिते शुक्रे, क ।
३. स्वगृही, क ।
४. श्लोकऽयं नास्ति, क ।
५. अन्य स्थानेषु सर्वेषु, ख ।
६. परो, क ।
७. वापि, क ।
८. स्थितौ, क ।
९. स्थाने, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२७. अन्य स्थानों पर होने से जातक धनवान्, विद्यावान् तथा धार्मिक होता है। उसको अनेक प्रकार के सुख होते हैं। किन्तु पुत्र की हानि अवश्य ही होती है।

२८. शुक्र जब **उपवेश** में होता है तब जातक बलवान् एवं धार्मिक होता है। उसके दाहिने अंग में कर्मज व्याधि होती है तथा जोड़ों में दर्द

२९. यदि वह **उच्चस्थ** हो, **स्वगृही** हो या मित्रग्रह से युक्त तो तब सभी प्रकार के सुख होते हैं। ऐसा शुक्र पुत्र, स्त्री एवं धन प्रदान करता है।

३०. **नेत्रपाणि** भाव में शुक्र हो तब निश्चित रूप से आँख नष्ट होती है। विशेषत: यदि वह **लग्न** या **सप्तम** स्थान में हो तब अवश्य ही यह फल होता है।

३१. **नेत्रपाणि** में शुक्र यदि **कर्म** स्थान में हो तो अपने द्रारिद्रय दोष से समुद्र को भी सुखा देता है।

३२. जब **कर्म** स्थान में शुक्र हो तो जातक दो पत्नियों वाला बहुत सम्पन्न, तीर्थ यात्राएँ करने वाला, स्वाभिमानी, साहसी तथा राज-सेवक होता है।

३३. शुक्र **प्रकाश** में हो तो जातक धनवान्, धार्मिक, पवित्र आचरण वाला होता होता है।

**जब वही शुक्र लग्न, द्वितीय, नवम या सप्तम स्थान में हो—**

३४. **मित्र के घर में या उच्चस्थ हो तो राजयोग कारक होता है; विशेष रूप से जब कर्मस्थान में स्थित हो।**

८

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अन्य गेहे यदा शुक्रः सर्वरोगसमन्वितः ।
[1]नित्यप्रवासी दुःखी च जायते नात्र[2] संस्थिते ।।३५।।

गमनेच्छायां च यो जातो भ्रातृनाशो भवेद् ध्रुवम् ।
माता च म्रियते तस्य शैशवे व्याधिसंयुतः ।।३६।।

शुक्रस्य गमने जातः पादमूले रुजान्वितः ।
नित्योत्साहो[3] महाशिल्पी तीर्थेषु तत्परो भवेत् ।।३७।।

सभायां च भृगौ[4] जातो राजपुत्रो[5] धनाधिपः ।
कुशलः सर्वकार्येषु केवलं शूलरोगवान् ।।३८।।

शत्रुगेहे[6] यदा शुक्रः शत्रुयुक्तोऽथवीक्षितः ।
तदा सर्वविनाशः स्यान्नानारोगसमन्वितः ।।३९।।

भृगोरागमने जातो दुःखितो बहुभाषकः ।
दन्तरोगी पुत्रशोकी[7] जायते च नराधमः[8] ।।४०।।

रिपुगेहे[9] रिपुयुक्तो रिपुणावीक्षितोऽथवा[10] ।
तदा सर्वविनाशः स्यात् स्त्रीपुत्रयो[11]र्विशेषतः[12] ।।४१।।

---

१. नित्यं, क ।
२. नृत्यके स्थिते, क ।
३. नित्योत्साही, क ।
४. भृगो, क ।
५. राजमान्यो, क ।
६. शत्रुगेहो, क ।
७. शोको, क ।
८. नराधिपः, क ।
९. रिपुगेही रिपुयुतो, क ।
१०. यदि, ख ।
११. स्त्री पुत्रस्यवि, ख ।
१२. इतः परं
द्वितीये दशमे वापि रिपुहेगीक्षितोऽथवा
तदा सर्वविनाशः स्यात् स्त्रीपुत्रयोर्विशेषतः ।।
इत्यधिकः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

३५. शुक्र यदि दूसरे ग्रह के घर में है तो जातक अनेक रोगों से ग्रस्त होगा।

यदि वह अन्य स्थानों में स्थित है तो जातक सदा प्रवासी एवं दुःखी होता है।

३६. शुक्र की **गमनेच्छा** में उत्पन्न जातक के भाई का नाश होता है, माता का मरण होता तथा वह बचपन में रोगी होता है।

३७. शुक्र के **गमन** में उत्पन्न जातक के पैर के निचले भाग में रोग होता वह सदा उत्साही, महान् शिल्पकार तथा तीर्थयात्री होता है।

३८. शुक्र के **सभा** में होने पर जातक राजपुत्र, धनी, सभी कार्यों में कुशल होता है। उसे केवल शूल रोग होता है।

३९. जब शुक्र शत्रु के घर में अथवा शत्रु के साथ या उससे दृष्ट होता है तब जातक का सर्वनाश होता है एवं वह अनेक प्रकार के रोगों से ग्रस्त होता है।

४०. भृगु के **आगमन** में उत्पन्न जातक दुःखी, बड़बोला, दन्तरोगी होता है। उस नराधम को पुत्र से कष्ट होता है।

४१. जब वह शत्रु के घर में या शत्रु से युक्त हो या उस पर शत्रु की दृष्टि हो तो सर्वनाश होता है। विशेष रूप से स्त्री एवं पुत्र का नाश होता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

द्वितीये दशमे वापि चतुर्थे चाष्टमे तथा ।
सर्वसौख्यं[1] भवेत्तस्य नात्रकार्या विचारणा ।।४२।।

शुक्रस्य भोजने जातो बलवान्दाम्भिकः सदा ।
[2]महाधनी भवेन्नित्यं वाणिज्येनाथ सेवया ।।४३।।

मन्दाग्निः पित्तशूली शिरोरोगी रुजान्वितः ।
नानादुःखं भवेत्तस्य प्रवासी परसेवकः ।।४४।।

[3]नृत्येच्छायां च यो जातः[4] स वाङ्मी जायते ध्रुवम् ।
पाण्डित्यं कविता चैव वर्धते[5] च दिने दिने ।।४५।।

यदि दैवाद् [6]भवेन्नीचो मूर्खो भवति निश्चितम् ।
[7]तुङ्ग स्थानेऽस्य गेहे च राजपुत्रो महाबली ।।४६।।

कामुको बहुकान्तश्च नानायोषित्प्रियः सदा ।
श्यामवर्णस्तथा मानी क्षणिको लम्पटः सदा ।।४७।।

शुक्रस्य कौतुके[8] जातो धनवान्सात्त्विको महान् ।
महाहृष्टो महावक्ता कौतुकी च भवेत्सदा ।।४८।।

---

१. सुखं, क ।
२. महा, ख ।
३. नृपेच्छायां, क ।
४. जास्य, क ।
५. वदते, ख ।
६. भवो, क ।
७. तुंगस्थाने ग्रहे वास्या राजपात्रो महावली, क ।
८. कामुके, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

४२. द्वितीय, दशम, चतुर्थ तथा अष्टम में यदि हो तो सभी प्रकार का सुख मिलता है इसमें तनिक भी विचार नहीं करना चाहिए ।

४३. शुक्र के भोजन में उत्पन्न जातक बलवान् सदा दम्भी तथा व्यापार या नौकरी से अत्यन्त धनवान् होता ।

४४. उसे भूख कम लगती है, पित्तज शूल होता है सिर में रोग एवं अन्य रोग भी होते हैं । उसे अनेक प्रकार के दुःख होते हैं, वह घर से दूर होता है तथा दूसरे की सेवा करता है ।

४५. नृत्येच्छा भाव में जो जातक उत्पन्न होता है वह निश्चित रूप से वाङ्मी होता है । उसका पाण्डित्य एवं कवित्व दिन प्रतिदिन बढ़ता है ।

४६. यदि भाग्यवश वह नीच स्थान में हो तो जातक निश्चित रूप से मूर्ख होता है ।

उच्चस्थ एवं स्वगृही होने पर जातक युवराज एवं महान् बलशाली होता है ।

४७. वह जातक कामी, अनेक स्त्रियों वाला, अनेक स्त्रियों का प्रिय, श्यामवर्ण का, स्वाभिमानी, क्षणिकरूप से लम्पट होता है ।

४८. कौतुक में शुक्र के होने पर जातक, धनवान् महान् सात्त्विक वृत्ति वाला, अति प्रसन्न, उत्तम वक्ता, तथा कौतुकपूर्ण कार्य करने वाला होता है ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

बहुपुत्रकलत्रश्च नानासुखसमन्वितः ।
नीचे[1] तद्विपरीतं स्याद्दुःखशोकभयाकुलः[2] ।।४६।।

निद्रायां च भृगौ[3] जातो भवेद्रोगी सुनिश्चितम् ।
नित्यक्लेशयुतो रोगी दरिद्रो विकलो महान् ।।५०।।

मित्रस्थाने तु जायायां यदि निद्रा भवेदपि[4] ।
तदा सर्वविनाशः स्याद् विष्णुना परिकीर्तितः ।।५१।।

इति हरिनाथरचितायां संकेतकौमुद्यां भावप्रकरणे गुरुशुक्रभावो नाम चतुर्थोऽध्यायः[5] ।।४।।



१. नीचेनविप, क ।
२. भयांतकः, क ।
३. भृगोर्जा, क ।
४. भगोरपि, क ।
५. इति शुक्रः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

४६. पुत्रवान्, कई स्त्रियों का स्वामी, अनेक सुखों से सम्पन्न होता है किन्तु शुक्र के नीच होने पर दुःख, शोक, भय आदि विपरीत फल होते हैं।

५०. शुक्र जब निद्रा में हो तो जातक निश्चित ही रोगी होता है। वह सदा कष्ट में रहता है, दरिद्र एवं मन से व्याकुल रहता है।

५१. मित्र के स्थान में या जाया स्थान में स्थित शुक्र यदि निद्रा में है तब जातक का सर्वनाश होता है। यह विष्णु ने कहा है।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## पञ्चमोऽध्यायः

—:०:—

।। अथशनिभावफलम् ।।

शयने च [1]शानेर्जातः क्षुधितो विकलस्तथा ।
गुह्यस्थाने भवेद्रोगः[2] कोशवृद्धिश्च जायते ।।१।।

लग्ने षष्ठाष्टमे[3] चैव शयने च शनैश्चरः ।
तदा नित्य[4]प्रवासी स्याद् दरिद्रो विकलो महान् ।।२।।

पञ्चमे नवमे चैव दशमे[5] सप्तमे तथा ।
[6]पुत्रवान्धार्मिकश्चैव सर्वसौख्य[7]प्रदायकः ।।३।।

उपवेशे यदा जातः श्लीपदी दद्रुसंयुतः ।
धनहानिर्नरेन्द्रैश्च[8] पीडाभवति नित्यशः ।।४।।

लग्ने वा दशमेवापि नेत्रपाणौ शनैश्चरः ।
कर्मबाधा[9] भवेत्तस्य सर्वदुःखप्रदायकः ।।५।।

---

१. शनिर्जातः, ख ।
२. भवेद्रोगाः, क ।
३. ष्टके, ख ।
४. नित्यं, क ।
५. सप्तमे दशमे, क ।
६. बाधो, ख ।
७. सुख, ख ।
८. नरेन्द्रेण, क ।
९. बाधो, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ॥ पञ्चम अध्याय ॥

—:●:—

१. शनि के **शयन** में उत्पन्न जातक भूखा एवं अव्यस्थित चित्तवाला होता है। उसके गुप्ताङ्ग में रोग एवं [अण्ड]कोश की वृद्धि होती है।

२. **शयन** भाव का शनि जब **लग्न, छठें** या **आठवें** स्थान में हो तब जातक प्रवासी, दरिद्र एवं अव्यवस्थित चित्त वाला होता है।

३. किन्तु जब वह **पाँचवें, नवें, दसवें** या **सातवें** में हो तो जातक पुत्रवान्, धार्मिक एवं सर्वसुख संपन्न होता है।

४. **उपवेश** में होने पर जातक श्लीपद एवं दाद से पीड़ित होता है। राजा के कारण धनहानि होती है तथा सदा कष्ट होता है।

५. **नेत्रपाणि** में शनि जब लग्न या दशम स्थान में हो तो उस जातक के कर्म में बाधाएँ होती है तथा शनि सब प्रकार के सुख देता है।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सप्तमे पञ्चमे वापि पुत्रदारधनक्षयः ।
अन्यगेहेषु धनवान्नानासुखयुतः[1] सदा ।।६।।

नेत्रपाणौ यदा जातो मूर्खो भवति पण्डितः[2] ।
धनवान् धार्मिकश्चैव द्विभार्यो बहुसम्पदः ।।७।।

पित्तशूली [3]क्षणक्रोधी [4]अग्निभीति जलाद् भयम् ।
शिरो रोगी [5]गुह्यरोगी सन्धौ भवति वेदना ।।८।।

लग्नेऽथ दशमे [6]चैतद्विपरीतं फलं वदेत् ।
प्रकाशने च यो जातो राजमान्यो[7] भवेच्च सः ।
नानागुणेन[8] गुणवान्धार्मिकः पण्डितः शुचिः ।।९।।

जाया स्थाने च लग्ने च प्रकाशे च यदा शनिः ।
तदा सर्वविनाशः स्याज्ज्ञा[9]तिध्वंसो[10] भवेद् ध्रुवम् ।।१०।।

गमनेच्छायां च यो जातो बहुपुत्रो महाधनः ।
[11]पण्डितो गुणवान्दाता जायते च नरोत्तमः ।।११।।

गमने च शनिर्जातः[12] श्लीपदी रोगसंयुतः ।
[13]दन्तघाती महाक्रोधी कृपणः परनिन्दकः ।।१२।।

---

१. सौख्य प्रदायकः, क ।
२. पीडितः, क ।
३. क्षणा, ख
४. वाग्नौभीतिर्जले भयम्, ख ।
५. गुदे, क ।
६. चेव, क ।
७ राजपन्नो, क ।
८. गुणे च, ख ।
९. स्याज्जाति, ख ।
१०. धंसो, क ।
११. तथैव बहुलं यातो बहुपुत्रो महाधनः, क ।
१२. र्यातः, क ।
१३. दन्तद्यावी, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

६. यदि सातवें एवं पाँचवें स्थान में हो तो पुत्र, स्त्री एवं धन की हानि होती है। किन्तु इसके अतिरिक्त स्थानों में स्थित होने पर जातक धनवान् एवं अनेक सुखों का भागी बनता है।

७. जब शनि नेत्रपाणि में हो तो मूर्ख जातक भी पण्डित होता है। तथा वह धनवान् धार्मिक दो पत्नियों का स्वामी तथा अनेक सम्पत्तियों वाला होता है।

८ वह पित्तजशूल रोगयुक्त, क्षण भर में क्रुद्ध होने वाला होता है। उसे अग्नि एवं जल से भय होता है। शिर में रोग, गुप्ताङ्ग में रोग एवं जोड़ों में दर्द होता है।

९. किन्तु **लग्न** या **दशम** स्थान में हो तब इसके विपरीत फल प्राप्त होता है।

शनि के **प्रकाश** में जो उत्पन्न हुआ वह राजा के द्वारा सम्मानित होता है। वह जातक अनेक गुण युक्त, धार्मिक, पण्डित एवं पवित्र आचरण वाला होता है।

१०. **प्रकाश** भाव में शनि जब **जाया** स्थान में या लग्न में हो तब निश्चित रूप से सर्वनाश एवं विशेष रूप से बन्धु-बान्धवों की क्षति होती है।

११. शनि के **गमनेच्छा** में जो जातक उत्पन्न हुआ वह अनेक पुत्रों वाला, अत्यन्त धनवान्, विद्वान्, गुणो एवं उदार होता है।

१२. शनि के **गमन** भाव में उत्पन्न जातक श्लीपद रोग ग्रस्त होता है। तथा उसके दाँतों में चोट लगती है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सुतस्थाने कलत्रे वा शनिस्तत्र भवेत् क्वचित् ।
तदा सर्वं सुतान् हन्ति कलत्रं च[1] विशेषतः ।।१३।।

गमने च शनौ लग्ने पादमूले रुजान्वितः ।
तीर्थे च गमनं[2] नित्यं पुत्रदारैर्विवर्जितः ।।१४।।

कर्मस्थाने कलत्रे वा धर्मे वा द्वादशे पुनः ।
तदा [3]सर्वसुखं प्रोक्तं पण्डितोऽपि धनेश्वर ।।१५।।

सभायां च शनौ[4] जातः पुत्रदारधनैर्युतः ।
सर्वत्र लभते विद्यां नानारत्न[5]समन्वितः ।।१६।।

शत्रुस्थान[6]गतः सौरिः शत्रुणा यदि वीक्षितः ।
तदा सर्वविनाशः स्याद् विष्णुना [7]परिकीर्तितम् ।।१७।।

आगमने[8] च शनिर्जातो महाक्रोधी रुजान्वितः ।
सर्पादिभिश्च [9]संदष्टो [10]भ्रातृनाशो भवेद् ध्रुवम् ।।१८।।

।। लग्ने चैतच्चिन्तनीयं सर्वमेवफलार्थकम्[11] ।।

द्वितीये वा तृतीये वा पञ्चमे सप्तमेऽपि वा ।
वित्त पुत्र कलत्रैश्च भ्रातृभिः सह मोदते ।।१९।।

---

१. वा न संशयः, क ।
२. गमने क, ख ।
३. वाससुखं, क ।
४. शनेजातः, क ।
५. समन्विताम्, ख ।
६. स्थाने गते सौरि, ख ।
७ परिकीर्तितः, ख ।
८. शनेरागमने, क ।
९. संदष्टः, क ।
१०. शत्रु, क ।
११ लग्नेजातश्चिन्तनीयम्, ख ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

१३. सुत स्थान या जाया स्थान में यदि वही शनि हो तो सभी पुत्रों एवं विशेष रूप से स्त्री को हानि करता है।

१४. गमन में शनि यदि लग्न में हो तो जातक के पैर के निचले भाग में होता है। वह तीर्थयात्रा करता है तथा पुत्र एवं पत्नी से हीन होता है।

१५. कर्म स्थान, जाया स्थान, धर्म स्थान या द्वादश स्थान में होने पर जातक सब प्रकार से सुखी विद्वान् एवं धनी होता है।

१६. सभा में शनि हो तब जातक पुत्र, पत्नी, धन से सम्पन्न होता है। उसे सर्वत्र विद्या प्राप्ति होती है तथा अनेक प्रकार के रत्न प्राप्त होते हैं।

१७. जब शत्रु स्थान में सूर्य पुत्र शनि हों, तथा उस पर शत्रु ग्रह की दृष्टि हो तब विष्णु का कथन है कि सर्वनाश होता है।

१८. शनि जब आगमन में हो तो जातक महाक्रोधी एवं रोगी होता है। उसे सर्पादि विषैले जीवों से भय होता है तथा निश्चित रूप से भाई की हानि होती है।

यह फल लग्नस्थ शनि का होता है।

१९. द्वितीय, तृतीय, पञ्चम या सप्तम में स्थित होने पर जातक धन, पुत्र, स्त्री एवं भाइयों के साथ प्रसन्नता पूर्वक रहता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

नवमस्थो यदा [1]सौरो भवेदागमने[2] पुनः ।
[3]तदा पुण्ये भवेद्धानिर्विघ्नः स्याच्च पदे पदे ।।२०।।

[4]भोजने च यदा जातो मन्दाग्निश्च तदा भवेत् ।
अर्शरोगी च शूली च चक्षुरोगी भवेच्च सः ।।२१।।

तुंगस्थाने स्वगेहे वा भोजने च यदा शनिः ।
तदा सर्वसुखं ज्ञेयं सर्वरोगविवर्जितः ।।२२।।

[5]नृत्येच्छायां च यो जातो धनवान् धार्मिको भवेत् ।
नानाविधं स्मृतं सौख्यं भवेत्तस्य न संशयः ।।२३।।

नानाधनी[6] च मानी सर्वसौख्यप्रदायकः ।।२४।।

कौतुके च यदा जातो राजपुत्रो[7] महाधनी ।
दाताभोक्ता महादक्षो धार्मिकः पण्डितः शुचिः ।।२५।।

पञ्चमस्थो[8] यदा सौरि[9]र्नृत्यलिप्सा भवेद्यदि ।
नाशयेत् सकलान् पुत्रानिति [10]प्राह दिगम्बरः ।।२६।।

पञ्चमे सप्तमे वापि नवमे दशमेऽपि वा ।
तदा सर्वविनाशः स्यात् सर्वरोगसमन्वितः ।।२७।।

---

१. जागे, क ।
२. मन्दाग्निश्चमहान्भवेत्, क ।
३. पंक्तिर्नास्ति, क ।
४ पाठोनास्ति, क ।
५. कृत्येच्छायां, ख ।
६. नानाधने धनी मानी, क ।
७. राजपात्रो, क ।
८. पञ्चमस्थे, ख ।
९. सौरी, क ।
१०. सत्यमाह, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२०. शनि जब **नवम** स्थान में तथा **आगमन** भाव में होता है तब पुण्य कार्य में हानि एवं पग-पग पर विघ्न होता है।

२१. जव शनि **भोजन** में हो तव जातक को भूख कम लगती है, ववासीर, शूल एवं आँखों का रोग होता है।

२२. **उच्चस्थ** या **स्वगृही** शनि जव **भोजन** भाव में हो तब सभी प्रकार का सुख होता है एवं शरोर नीरोग रहता है।

२३. शनि की **नृत्येच्छा** में जो उत्पन्न हुआ वह धनवान् एवं धार्मिक होता है उसे निःसन्देह अनेक प्रकार के सुख प्राप्त होते हैं।

२४. **कौतुक** भाव में शनि होने पर जातक अनेक प्रकार की सम्पत्तियों का स्वामी, स्वाभिमानी होता है तथा सब प्रकार से सुखी होता है।

२५. वह जातक उदार, भोगी अत्यन्त प्रवीण, धार्मिक, पण्डित तथा पवित्र आचरण वाला होता है।

२६. **नृत्यलिप्सा** मे शनि जब **पञ्चम** स्थान में हो तो दिगम्बर ने कहा है कि वह सारे पुत्रों का नाश करता है।

२७. **पाँचवें, सातवें, नवें,** या **दसवें** स्थान में होने पर सर्वनाश होता है तथा जातक सारे रोगों से ग्रस्त होता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

निद्रायां च शनि[1]र्जातो धनवान् पण्डितः शुचिः ।
चक्षुरोगी पित्तशूली द्विभार्यो बहुपुत्रकः ।।२८।।

कर्मस्थाने यदा सौरिर्विशेषफलदायकः ।
यदि दैवाद् भवेन्निद्रा नाशो भवति निश्चितम् ।।२९।।

[2]कर्मनाशो धर्मनाशः[3] क्षुधितो दुःखितः सदा ।
नित्य प्रवासी [4]दुःखी च कार्य हानिः पदे पदे ।।३०।।

[5]यदि केन्द्रे त्रिकोणे स्यात् तुङ्गे वा स्वगृहे पुनः ।
तदा सर्वसुखं विद्याद्द्विभार्यो बहुपुत्रकः ।।३१।।

सुतस्थाने च [6]जायायां यदि निद्रा भवेत् पुनः[7] ।
तदा सर्वं विचार्यं च वैपरीत्येन निश्चितम् ।।३२।।

।। इति शनिभावफलम् ।।

।। अथराहुभावफलम् ।।

शयने च यदा राहौ[8] यस्य जन्म भवेत्[9] पुनः ।
तस्य क्लेशो महादुःखं जायते च न संशयः ।।३३।।

शयने च यदा जातः श्लीपदी च [10]संशयः ।
धनहानिर्भवेत्तस्य पीडा भवति नित्यशः ।।३४।।

---

१. शने जातो, क ।
२. कार्य, क ।
३. नाशो, क ।
४. दुःखीति, ख ।
५. यदि तुंगी त्रिकोणी स्यात्केन्द्रे च स्वगृही पुनः, क ।
६. जातोऽयं, क ।
७. सुतस्थाने इति श्लोकार्धत्वेन तदासर्वसुख मिति स्वीकृतम्, क ।
८. राहो, क ।
९. पुनर्भवेत्, क ।
१०. रोगसंयुतः, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

२८. शनि **निद्राभाव** में हो तो जातक धनवान्, विद्वान्, पवित्र आचरण वाला, आँखों से रोगी, पित्तजशूल से ग्रस्त, दो पत्नियों का स्वामी एवं अनेक पुत्रों का पिता होता है।

२९. शनि **कर्म** स्थान में स्थित होने पर विशेष फल देता है। यदि भाग्य से **निद्रा** भाव में हो तो निश्चित ही नाश होता है।

३०. कर्म का नाश एवं धर्म का नाश होता है। जातक भूखा, दुःखी, घर से सदा दूर होता है तथा पग-पग कार्य की हानि होती है।

३१. यदि वह **केन्द्र**, **त्रिकोण**, **उच्च स्थान**, या **स्वगृही** हो तब जातक को सभी प्रकार का सुख, दो पत्नियाँ एवं अनेक पुत्र प्राप्त होते हैं।

३२. **सुत** स्थान में या **जाया** स्थान में स्थित शनि यदि **निद्रा** में हो तो सम्पूर्ण फल विपरीत समझना चाहिये।

**[शनि का फल समाप्त]**

**[राहु के भावों का फल]**

३३. राहु के **शयन** में जिसका जन्म होता है उसे निःसंदेह कष्ट एवं महान् दुःख प्राप्त होता है।

३४. उसके **शयन** में उत्पन्न होने पर जातक निश्चित रूप से श्लीपद रोग ग्रस्त होता है। उसको धनहानि होती है तथा सदा पीड़ित रहता है।



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मिथुने च तथा सिंहे कन्यायां वृषभे[1] तथा ।
सर्वैः सुखैः[2] समायुक्तः शयने च विधुन्तुदे[3] ।।३५।।

उपवेशे च यो जातः श्लीपदी रोगसंयुतः ।
धनहानिर्भवेत्तस्य पीडा भवति नित्यशः ।।३६।।

नेत्रपाणौ [4]च यो जातश्चक्षुरोगी भवेद् ध्रुवम् ।
सर्पाद्भयं [5]महत्तस्य व्याघ्राच्चैव विशेषतः[6] ।।३७।।

[7]अधर्मेषु च वित्तं स्यात् स्त्रीवशो धनवानपि ।
अन्तः[8] क्रूरो महाधैर्यः[9] क्षणिको बहुभाषकः ।।३८।।

[10]कोशे पार्श्वे भवेद् विघ्नं शैशवे च रुजान्वितः ।
[11]जनिबन्धौ महाद्वेषी बाह्यबन्धौ[12] महानपि ।।३९।।

नेत्रपाणौ यदा राहौ[13] लग्ने वा सप्तमेऽपि वा ।
तदा सर्वविनाशः स्यात् सर्वदुःखप्रदायकः ।।४०।।

गुह्यस्थाने भवेद्रोगी [14]जलाच्चैव भवेद् भयम् ।
नवमे दशमे वापि गमनेच्छा भवेद् यदि ।।४१।।

---

१. वृषभोजथा, क।
२. सर्व दुःख, क।
३. विंदतुदः, क।
४. यदा, ख।
५. महा, क।
६. चतुर्थ पञ्चम श्लोकयोर्व्यत्यो वर्तते, क।
७. अधर्मेषु, ख।
८. आति, क।
९. महाधैर्यं, ख।
१०. कोशपाश्च, ख।
११. निज, ख।
१२. वाह्य च स्व, क।
१३. राहुः, क।
१४. जले, क।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

३५. मिथुन, सिंह, कन्या तथा वृष राशियों में उक्त शनि शयन भाव में स्थित हो तो जातक सम्पूर्ण सुख प्राप्त करता है ।

३६. शनि के उपवेश में उत्पन्न जातक श्लीपद रोगी होता है । उसे धन की हानि एवं सदा कष्ट होता है ।

३७. शनि के नेत्रपाणि अवस्था में उत्पन्न जातक निश्चित रूप से आँख से रोगी होता है । उसे सर्प से एवं विशेष रूप से वाघ से अत्यन्त हानि होती है ।

३८. उसका धन अधर्म में खर्च होता है । वह धनवान् होते हुए भी स्त्री के वशीभूत होता है । ऐसा जातक मन से क्रूर, अत्यन्त धैर्यवान्, क्षणिकबुद्धि वाला, तथा अधिक बोलने वाला होता है ।

३९. उसके अण्डकोश एवं पार्श्वभाग में बाधा होती है । बचपन में रोग होता है । वह जातक सोदर भाइयों से द्वेष रखता है यद्यपि बाहरी रिश्तेदारों के लिए अच्छा होता है ।

४०. राहु जब नेत्रपाणि में हो तथा लग्न या सातवें स्थान में स्थित हो तब वह सारे दुखों का कारक होता है तथा जातक का सर्वनाश होता है ।

४१. यदि राहु की गमनेच्छा हो तथा वह नवम या दशम स्थान में स्थित हो तो जातक को गुप्तांग में रोग एवं जल से भय होता है ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रकाशने च यो जातो धनवान्धार्मिकः सदा ।
नित्यप्रवासी चोत्साही सात्त्विको राजसेवकः ।।४२।।

सिंहे वा कर्कटे वापि यदि राहुः प्रकाशने ।
शिरश्छेदकरो योगो विष्णुना परिकीर्तितः[१] ।।४३।।

गमनेच्छायां च यो [२]जातो बहुपुत्रो महाधनः ।
पण्डितो गुणवान् दाता जायते च नरोत्तमः[३] ।।४४।।

गमनेच्छायां च यो जातो नाना रोगो धनक्षयः ।
दन्तघाती महाक्रोधी पिशुनः परनिन्दकः ।।४५।।

व्याघ्रभीतिः सर्पभीतिर्निगडस्थो दुरासदः ।
स्त्रीनाशो धननाशश्च बन्धुहीनो भवेन्नरः ।।४६।।

सभायां च यदा जातः कृपणो धनसंयुतः ।
[४]नानापुण्येन गुणवान् धार्मिकः पतितः शुचिः ।।४७।।

लग्ने वा दशमे वापि पञ्चमे च यदा भवेत् ।
भार्यापुत्रविनाशः स्याद्वित्तनाशोऽतिचञ्चल[५]ः ।।४८।।

आगमने च यो जातस्सर्वदुःखप्रदायकः ।
[६]सुहृद्बन्धुविनाशः स्यान्नानाक्लेशोऽपि जायते ।।४९।।

---

१. परिकीर्तितम्, क ।
२. अधिकोपाठः क, ।
३. गमने च यदा जातो नाना रोगधनान्वितः, क ।
४. गुणेन, क ।
५. वञ्चकः, क ।
६. सहृ , क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

४२. जो जातक राहु के **प्रकाश** भाव में जन्म लेता है वह सदा धनवान्, धार्मिक, घर से दूर, सात्त्विक स्वभाव वाला तथा सरकारी नौकर होता है।

४३. विष्णु का कथन है कि **प्रकाश** भाव में राहु यदि सिंह या कर्क राशि में हो तो जातक के सर फटने का योग है।

४४. राहु के **गमनेच्छा** में उत्पन्न जातक अनेक पुत्रों का पिता, अत्यन्त धनी, पण्डित, गुणी, उदार तथा उत्तम पुरुष होता है।

४५. राहु के **गमनेच्छा** में उत्पन्न जातक अनेक प्रकार से रोगी होता है। उसके धन की हानि होती है। वह महाक्रोधी, दूसरे का दोष देखने वाला एवं परनिन्दक होता है।

४६. उस जातक को बाघ एवं सर्प से भय होता है, जेल जाना पड़ता है। उसके स्त्री एवं धन का नाश होता है तथा भाइयों की हानि होती है।

४७. राहु के **सभा भाव** में होने पर जातक कृपण, धनवान्, अनेक पुण्य कर्मों के कारण गुणी, धार्मिक, चारित्रिक दृष्टि से पतित किन्तु पवित्र आचरण वाला होता है।

४८. वही राहु जब लग्न, दशम या पञ्चम स्थान में हो तब जातक की पत्नी, पुत्र एवं धन का नाश होता है तथा वह चञ्चल बुद्धि वाला होता है।

४९. राहु के **आगमन** में उत्पन्न जातक दुःखदाई होता है। उसके मित्रों एवं भाइयों की हानि होती है तथा अनेक प्रकार के कष्ट होते हैं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भोजने च महालुब्धो मन्दाग्निश्च रुजान्वितः ।
दुःखितः कृपणश्चैव क्रूरश्च कलहप्रियः[1] ॥५०॥

यदि दैवाद्भवेच्चैव लग्ने वा दशमेऽपि च ।
पतितं तं विजानीयाच्चन्द्रवंशो[2] भवेदपि ॥५१॥

सप्तमे दशमे वापि भोजने च यदा तमः ।
नारीं च हन्ति नियतं पुण्ये विघ्नं करोति सः ॥५२॥

जातस्य[3] नृत्यलिप्सायां यदि लग्ने भवेत् क्वचित् ।
तदा खञ्जो महारोगी चक्षुनाशः[4] पुरः सदा ॥५३॥

अन्यगेहे[5] यदा जातो धनवान् बहुसम्पदः[6] ।
नानागुणेन गुणवान् द्विभार्यो बहुपुत्रकः ॥५४॥

[7]कौतुके च यदा जातः[8] सर्वगुणसमन्वितः ।
नानाधनेन[9] धनवान् पित्तशूली भवेन्नरः ॥५५॥

विहाय पञ्चमं[10] स्थानं सप्तमं दशमं तथा ।
नानादुःखं भवेत्तस्य पुत्रदार[11]विवर्जितः ॥५६॥

---

१. कृपणः चेद्वहि पापा क्रूरश्च कलहप्रियः, क ।
२. वंशे, क ।
३. जातश्च, ख ।
४. चक्षुनाशो दुरासदः, क ।
५. ग्रहे, क ।
६. सम्पदाः, क ।
७. कुतुके तु, क ।
८. जातस्सर्वगुणसमाश्रितः, क ।
९. गुणेन गुणवान्, क ।
१०. पञ्चमस्थान सहामे दशमे तथा, क ।
११. दारैर्वि"", क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

५०. **भोजन** भाव में होने पर जातक महालोभी, मन्दाग्नि एवं अन्य रोगों से ग्रस्त, दुःखी, कृपण, क्रूर तथा झगड़ालू होता है।

५१. यदि भाग्यवश वही राहु **लग्न** या **दशम** स्थान में हो तो कुलीन होने पर भी उसे पतित ही समझना चाहिए।

५२. राहु जब **भोजन** भाव से **सप्तम** या **दशम** स्थान में स्थित हो तो पत्नी की हानि एवं पुण्य कार्य में विघ्न उपस्थित करता है।

५३. **नृत्यलिप्सा** में राहु यदि जातक के **लग्न** में हो तो वह जातक लँगड़ा, महारोगी एवं अंधा होता है।

५४. अन्य स्थान में होने पर जातक धनवान्, सम्पत्तिवान्, अनेक गुण युक्त, दो पत्नियों वाला एवं अनेक पुत्रों का पिता होता है।

५५. **कौतुक** भाव में उत्पन्न जातक सर्वगुण सम्पन्न, अनेक प्रकार से धनी तथा पित्तज शूल रोग से ग्रस्त होता है।

५६. **पञ्चम, सप्तम** एवं **दशम** को छोड़ कर अन्यत्र यदि स्थित है तब जातक को अनेक प्रकार के कष्ट होते हैं तथा पुत्र एवं पत्नी से हीन होता है।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यदि दैवाद् भवेत्तुङ्गो[1] स्वगृहे वा कदाचन ।
तदा सर्वं शुभं ज्ञेयं[2] जायते नात्र संशयः ।।५७।।

निद्रायामपि यो जातः शोकदुःखरुजान्वितः ।
स्वस्थानेऽपि[4] च जायायां[5] याति निद्रां विधुन्तुदः[3] ।।५८।।

तदा[6] सर्वगुणैर्युक्तः सुतजायासमन्वितः ।
नवमे दशमे वापि यदि[7] निद्रा भवेत्पुनः ।।५९।।

तदाऽस्य तीर्थराजेषु[8] मृत्युर्भवति निश्चितम् ।
द्वितीयैकादशेवापि द्वादशे वा भवेत्पुनः ।।६०।।

तदा दारिद्र्यदोषेण कृत्स्नां[9] भ्रमति मेदिनीम् ।
नाना शास्त्रं समालोक्य क्रियते[10] ग्रन्थसंग्रहः ।
बलाबलविचारेण युक्त्या[11] संचिन्तयेद् बुधः ।।६१।।

इति श्री संकेतकौमुद्यां हरिनाथकृतायां भावप्रकरणे राहुभावो नाम पञ्चमोऽध्यायः ।।५।।



१. तुङ्गी स्वगृही, क ।
२. जातं, क ।
३. सुतस्थाने, क ।
४. जातायां, क ।
५. स्वस्थाने स्थीयते नित्यं पर सेवा सुतत्परः, क ।
६. नानास्थाने स्थितः सोऽपि धनपुत्र विवर्जितः । इत्यधिकः, क ।
७. निद्रा यदि, क ।
८. चतुर्थे राज्येषु, ख ।
९. नित्यं, क ।
१० कृतोयं, क ।
११. पुंसा, क ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

५७. यदि भाग्य से वह **उच्चस्थ** या **स्वगृही** हो तब जातक के लिए निश्चित हो सब कुछ शुभ ही होगा।

५८-६०. जो राहु की **निद्रा** में उत्पन्न हुआ वह जातक शोक, दुःख एवं रोग प्राप्त करता है। जब राहु **स्वगृही** या **जाया** स्थान में हो एवं **निद्रा** भाव में हो तब सर्वगुण सम्पन्न, स्त्री पुत्रवान् होता है। **नवमस्थ** या **दशमस्थ** राहु यदि **निद्रा** भाव में हो तब जातक को मृत्यु उत्तम तीर्थ में होना निश्चित है। यदि राहु **द्वितीय**, **एकादश** या **द्वादश** स्थान में स्थित हो तब जातक दरिद्रता के कारण इधर उधर भटकता है।

६१. अनेक शास्त्रों को देख कर यह ग्रन्थ संग्रह किया जा रहा हैं। बुद्धिमानों को चाहिए कि वे ग्रहों में बलाबल का ज्ञान युक्तिपूर्वक करके फल पर विचार करें।

**।। संकेत कौमुदी हिन्दी भावानुवाद समाप्त ।।**



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ख—अन्त्यः श्लोकः,

शाकेजिनात्यष्टिमिते
इषशुक्ले रवेस्तिथौ ।
अलंकरणेन सार्धम्
जाता संकेतकौमुदी ।।

क—पुष्पिका—

इति श्री हरिनाथाचार्यविरचितायां सकलाचार्यमगंतस्युतायां संकेत-कौमुद्याम् सूर्यादिफलं समाप्तम् । संवत् १६५३ तत्र मार्गशीर्षशुक्ला ४ भौमवासरे लिखितम् कन्हैयालालस्य आत्मज पाण्डेजी का नन्दरामजी का । शुभम् श्रीरस्तु । श्रीभगवत्यै नमो नमः ।

[ शारदाक्षर (ख) मातृकायां पुष्पिका नास्ति । ग्रन्थश्च नवीनेकर्गदे पुनर्लिखितः स्यात् ।]

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# श्लोकानुक्रमणिका



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

